With the best Compliments of :— The Auth.

॥ श्रीः ॥

# ॥ न्यायबोधिनी नीलकंठीय विषयमाला ॥



मायूरस्थ

कामाक्षी संगृहीता ॥

Published by

***Kamakshi Amma,***

***at MAYAVARAM.***

**Printed at the**

**SRI VIDYA PRESS, KUMBAKONAM.**

 **1912.** 

**Price As. 10.**

# PREFACE.

Kâmâkshi Amma the authoress of this treatis " Nyayabodhini Neelakhanteeya Vishayamalâ " lives on the banks of the Kâveri river in Mayavaram. She is a Brahmin lady of the Andhra Community and comes of a well known respectable family the founder of which was Dubash Ramaswami Iya who built and gave away in charity Dubash Agraharam in Mayavaram a century ago Her early education was looked after by her mother a literate in Telugu the mother-tongue of the family. Loosing her husband Yanamandram Ramalinga Iya, B. A. in 1871 when she was in her teens, she devoted her time to the study of Samaskrita Literature and philosopy. Her father and her brothers had always encouraged her literary and religious pursuits and now the only surviving relation of hers is Rao Bahadur C. S. Subhramanyam. This work was originally prepared by her solely for her own use as a mnemonic. At the suggestion of her literary friends she has ventured to publish the work.

MAYAVARAM.
*August 1912.*

**K. B. R.**

# OPINIONS.

## SANSKRIT COLLEGE CALCUTTA.

महाशयाः !

श्रीमत्प्राहितामद्वैतदीपिकां श्रुतिरत्नप्रकाशार्दीश्चासाद्यामन्दानन्दमविन्दाम। श्रीमत्याः कामाक्ष्याः अद्वैतसिद्धिप्रमुखग्रन्थेषु प्रवेशमवलोक्य चेतो विस्मयाकुलं सर्वदा तदीयप्रशंसामेव करोति ॥

25—6—10 (Sd.) लक्ष्मणशास्त्री. (द्राविड)

---

2. इदानीं नवसालपुरीनिवासिनः दानाधिकारिणः बालकृष्णशास्त्रिणः ।

सिध्यन्तु सर्वाण्यभीष्टानि । भवत्या विरचितटिप्पणीसहितः पण्डित शिरोमणित्र्यंबकभट्टविरचितश्रुतिरत्नप्रकाशः श्रुतिमतोद्योतश्चेति पुस्तकद्वयं लब्धं । पण्डितप्रकाण्डानामपि दुष्प्रवेशे वेदान्तरत्ने ब्रह्मानन्दीयादौ प्रवेशं तादृशग्रन्थमुद्रणेन विदुषामुपकारे श्रद्धापद्धतिं चालोक्य विस्मयानन्दसागरे निमग्नाः स्मः । इतोपि पूरं सत्पदश्रद्धासमृद्धिमाशास्महे ॥

14—7—10. (Sd.) बालकृष्णशास्त्री.

---

3. महामहोपाध्यायः चन्द्रशेखरशास्त्री

मैलापूर् संस्कृतविद्यामन्दिरे वेदभाष्यप्रवक्ता ।

अयि भोः विद्वद्वनिता जनाग्रेसरि !

तत्रभवत्या सबहुमानं प्रेषितं पुस्तकद्वयं अद्वैतदीपिकां, श्रुतिरत्न प्रकाशं च सामोदं स्व्यकार्षं भारतीयप्राक्तनविद्यायाः अतीव विरळताहेता

यस्मिन् कलिनिर्मले कमलमिव भवती प्रादुरासेति महदिदमाह्लादस्थानं। योषिद्भूतया भवत्यापि अद्वैतशास्त्रे संपादितं पाटवमुपलक्ष्य तुंदपरिभूताः पुमांसः इतः परमपिवा शास्त्राभ्यासे बद्धादरा भवेयुरिति विश्वसिमि ॥

इति

17—7—10. (Sd.) चन्द्रशेखरशास्त्री.

4. इदानीं नवसालपुरीनिवासी राजकीयविद्याशालोपाध्यायः गोकर्णेश्वरशास्त्री।

श्रियं नित्यं स दद्यात्ते कामाक्षि शशिशेखरः।
लौकिकश्रीनिधिर्यात्वं सती यस्यातिपूजनात् ॥ १ ॥

ब्रह्मविद्यासमुद्रोत्थं श्रुतिरत्नं महाद्भुतं।
अलब्धं पूर्वमस्माभिराशीच्छ्रुत्योरलंकृतिः ॥ २ ॥

भवद्यापितमध्यास्ते हृदयस्याप्यलंकृतिः।
ब्रह्मविद्यासमुद्रानुसारिष्वस्मासु केवलम् ॥ ३ ॥

भवत्या लब्धमित्येतद्ग्रन्थाधिक्यनियामकम्।
विधायोत्तेजनं तस्य टिप्पण्या शाणया पठम् ॥ ४ ॥

परार्थविनियोगेन वयमानन्दभागिनः।
एतादृशानि रत्नानि भवत्संपादितान्यपि ॥ ५ ॥

स्वीयत्वेन विभाव्यन्ते विबुधैश्शीलनैस्तव।
परार्थैकपराणां तु साधूनां किमियं स्तुतिः।
संतु श्रेयांसि भूयांसि सदा शंभोरनुग्रहात् ॥ ६ ॥

17—7—10. (Sd.) गोकर्णशास्त्री.

5. इदानीं नवसालपुरीनिवासिनः दानाधिकारिणः
गोपालशास्त्रिणः ।

अतिमधुरा कामाक्षीवाग्विवृताद्वैतदीपिका जयति ।
लब्धं पाण्डित्यं च व्यञ्जयतेऽस्याः सतां प्रमोदकरी ॥ १ ॥
श्रुतिरत्नप्रकाशोयं विद्वद्रत्नप्रकाशकः ।
कामाक्ष्याः श्रवणानंदं तनुते ह्येतदद्भुतम् ॥ २ ॥

पुदुकोट्टा
13—10—10

(Sd.) गोपालशास्त्री.

6. नवसालपुरीनिवासी विद्वान् सुब्रह्मण्यशास्त्री ।

श्रीमत्याः कामाक्ष्यंबायाः परमेश्वरप्रसादात् सर्वाणि श्रेयांसि भूयासुः पुदुकोट्टराजधानीनिवासी सुब्रह्मण्यशास्त्री निवेदयति वक्ष्यमाणप्रकारेण श्रुतिरत्नप्रकाशः श्रुतिमतोद्योतश्च ब्रह्मश्री परमहंसाना सकाशाल्लब्धः अद्राक्षं अतिमनोहराः तत्रत्याविषयाः भवत्कृतटिप्पण्या प्रकाशितार्थश्च सानन्दमन्वभवम् । एतस्मिन्विषये भवत्याः प्रवृत्तिं भवत्परिज्ञानं चालोच्य अभिनन्द्यात्रत्याः पण्डितवर्याः एवमेव पूर्वपुस्तकमुद्रणायां तत्परिशोधने च भूयसीं भवत्याः प्रवृत्तिमुत्तरोत्तरमाशास्महे ॥

(Sd.) सुब्रह्मण्यशास्त्री

7. वासुदेवब्रह्मेन्द्रसरस्वती ।

प्रेषिताद्वैतदीपिकाख्यग्रन्थः प्राप अद्वैतसिद्ध्यभ्यसनश्रमजन्यफलमनायासेन प्रेप्सुभिरनेनैव शीघ्रं लभ्येत। एतद्ग्रामे कृताद्वैतसिद्धिश्रमौ वर्तेते। ताभ्यामप्ययं ग्रन्थः समर्पणीयइति मे आशयः। तदर्थं पुस्तकद्वयं प्रेषणीयम्॥

8. श्रीः

॥ श्रीगुरुभ्यो नमः ॥

---

कामाक्षी कणभक्षकाक्षपदयोः शीक्षासु प्रेक्षावती
साक्षाच्छंकरपादपक्षसमयेष्वीक्षावतीत्यद्भुतम् ।
कामाक्षी जननीकटाक्षकरुणाभिक्षार्थिनी दीक्षिता
त्र्यक्षाचार्यमते कुपक्षरहिता हि क्ष्मातले राजते ॥

अद्वैतदीपिका यस्याः टिप्पणी घृतमिश्रिता ।
विद्वद्धृदयपात्रस्थामन्दध्वान्तविनाशिनी ॥ २ ॥

कामाक्षीनाम विदुषी मायूरपुरवासिनी ।
कावेरीतीरवास्तव्या विद्वन्मोदाय सा भवेत् ॥ ३ ॥

विदुषां कामनापूर्तौ वक्षि यस्मात्प्रवर्तते ।
कामाक्षीतेन कथिता भूयात् पुस्तकमुद्रणे ॥ ४ ॥

कुंभघोण (Sd.) तोर्वी शामण्णाचार्यः ।

॥ श्रीराम जय ॥

श्लो. अखिलागमसंचारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥

॥ श्रीगणेशाय नमः ॥

छायानायकरोहिणीसहचरस्वाहापतिस्वेक्षणं
हेयाधेयविलक्षणं श्रुतिशिरोवाक्यप्रमाणेक्षणम् ।
कायप्राणहृषीकबुद्धिमनसा कामान्तकं साक्षिणं
मायादूरविधूननाय सततं मायूरनाथं भजे ॥

चन्द्रालंकृतये जगत्प्रकृतये जन्माद्यनुख्यातये
सान्द्रानन्दविभूतये स्वरतये स्वाभिन्नविख्यातये ।
मायूररतये सुतुष्टमतये मायापराभूतये
श्रेयोदाय्यभयाम्बिकाधिपतये श्रेयः परं मङ्गळम् ॥

पूर्वाचार्यैः ग्रन्थारम्भसमये मङ्गळस्यानुष्ठानात् ग्रन्थादौ निबन्धनकरणाच्च तदनुसारेण गोवर्धनसुधीरपि स्वेष्टदेवतारूपकृष्णध्यानरूपमङ्गळमारचय्य शिष्यशिक्षायै ग्रन्थादौ निबध्नाति ॥ अखिलागमेति । तनुधातोः कृतिरर्थः आख्यातस्याश्रयत्वमर्थः । न्यायबोधिनीमिति द्वितीयायाः कर्मत्वमर्थः । कर्मतायां न्यायबोधिन्याः आधेयतासंबन्धेनान्वयः । तथाच न्यायबोधिनीनिष्ठा कर्मता । कर्मतायाः निरूपकतासंबन्धेन कृतावन्वयः । तथाच न्यायबोधिनीनिष्ठकर्मता निरूपककृत्याश्रयः गोवर्धनसुधीः ॥

ध्यात्वेति ध्यै धात्वर्थः ध्यानं तच्च विजातीयधीराहितसजातीयधीपरंपरारूपं । क्त्वाप्रत्ययस्य उत्तरकालीनत्वमर्थः । उत्तरकाली-

नत्वंच ध्वंसाधिकरणकालवृत्तित्वं। एकदेशध्वंसे ध्यानस्य प्रतियोगितासंबन्धेनान्वयः। तथाच ध्यानप्रतियोगिकध्वंसाधिकरणकालवृत्तित्वं। तस्य आश्रयतासंबन्धेन कृतावन्वयः। महइति द्वितीयायाः कर्मताऽर्थः कर्मतायां महसः आधेयतासंबन्धेनान्वयः। परशब्दस्य अपकर्षानाश्रयोर्थः। तस्याभेदसंबन्धेन महसि अन्वयः। श्रीकृष्णइति आख्या यस्यतत्। यच्छब्दार्थो महः। षष्ठ्याः आधेयतार्थः आधेयतायां महसो निरूपितत्वसंबन्धेनान्वयः। आख्याशब्दस्य शक्तिनिरूपकोर्थः आधेयताया आश्रयतासंबन्धेन शक्तावन्वयः। श्रीकृष्ण-इत्यस्य श्रीकृष्ण इत्यानुपूर्वीविशिष्टोर्थः। तस्याभेदसंबन्धेन शक्ति-निरूपकेऽन्वयः तथाच महोनिरूपिताधेयताश्रयशक्तिनिरूपकः श्रीकृष्णइत्यानुपूर्वी विशिष्टाभिन्नः इति विग्रहवाक्यार्थः। समासार्थस्तु श्रीकृष्णइत्या नुपूर्वीविशिष्टनिरूपितशक्त्याश्रयः। तस्याभेदसंबन्धेन महसि अन्वयः। संचारशब्दस्य प्रतिपाद्यतार्थः इनिप्रत्ययस्य आश्र-यतावानर्थःअखिलागमस्य प्रतिपाद्यतायां निरूपितत्वसंबन्धेनान्वयः। प्रतिपाद्यतायाः निरूपितत्वसंबन्धेनाश्रयतायामन्वयः। तथाच अ-खिलागम निरूपितप्रतिपाद्यतानिरूपिताश्रयतावान्। तस्य अभेद-संबन्धेन महस्यन्वयः। अखण्डबोधस्तु अखिलागमनिरूपित प्रति-पाद्यतानिरूपिताश्रयतावदभिन्न श्रीकृष्णइत्यानुपूर्वीविशिष्टनिरूपित शक्त्या श्रयाभिन्नापकर्षानाश्रयाभिन्न महोनिष्ठकर्मतानिरूपक ध्यान-प्रतियोगिकध्वंसाधिकरणकालवृत्तित्वाश्रयन्यायबोधिनीनिष्ठ कर्मता-निरूपक कृत्याश्रयः गोवर्धनसुधीरिति

"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
आक्षेपस्य समाधानं व्याख्यानं पंचलक्षणम्"॥

इत्यभियुक्तोक्त्या मूलोपरि प्राप्ताक्षेपस्य व्याख्यात्रैव समाधेयतया मंगलाचरणं पापजनकं निष्फलत्वात्। तन्निबन्धनमपि पाप

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्ट देवतानमस्कारात्मकं मंगलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति निधायेति ।

---

जनकं निष्फलत्वात् जलताडनवत् इत्यनुमानेन मंगलाचरण तन्नि-बन्धनयोः पापजनकत्वे सिद्धे निषिद्धकर्मकर्तृत्वेन मूलकारे प्रेक्षा-वतामनाश्वासेन तदीयग्रन्थस्य प्रेक्षावदनुपादेयत्वमिति शंकां परि जिहीर्षुः मंगलाचरणतन्निबन्धनयोः फलप्रदर्शनेनानुमानं तावन्निरा-करोति । चिकीर्षितस्येत्यादिना । तथाच पक्षे हेत्वभावरूपस्वरूपा-सिद्धिदोषो नुमानस्योक्तो भवति । मंगले निबन्धने च निष्फल-त्वरूप हेतोरभावात् समाप्तिशिष्यशिक्षारूपफलसत्त्वात् । चिकीर्षि-तस्येत्या देरयं शाब्दबोधः कृ ड्. धातोः कृतिरर्थः सन्प्रत्ययस्य इच्छार्थः क्तप्रत्ययस्य कर्मतावानर्थः इच्छायाः कृतौ विषयतासंबन्धे-नान्वयः । कृतेः निरूपितत्वसंबन्धेन कर्मतायामन्वयः । तथाच इच्छाविषयकृतिनिरूपितकर्मतावान् समुदायार्थः । ग्रन्थशब्दस्य आनुपूर्वीविशेषविशिष्टवर्णसमुदायोर्थः । ग्रन्थशब्दार्थे चिकीर्षित-शब्दार्थस्य अभेद संबन्धेनान्वयः ग्रन्थशब्दोत्तरषष्ठ्याः घटकतार्थः घटकतायां ग्रन्थस्य निरूपितत्वसंबन्धेनान्वयः तथाच इच्छाविषय-कृतिनिरूपित कर्मतावदभिन्न ग्रन्थनिरूपित घटकता इति भवति । विघ्नानामभावः निर्विघ्नं । षष्ठ्याः प्रतियोगितार्थः प्रतियोगितायां विघ्नस्य आधेयतासंबन्धेनान्वयः प्रतियोगितायाः निरूपकतासं-बन्धेनाभावेऽन्वयः । तथाच विघ्ननिष्ठप्रतियोगितानिरूपका भाव-इति विग्रहार्थः । समासार्थस्तु सएव । परिसमाप्तिः अर्थः यस्यतत् । यच्छब्दस्य मंगल मर्थः षष्ठ्याः जन्यतार्थः जन्यतायां मंगलस्य निरूपितत्वसंबन्धेनान्वयः । अर्थशब्दस्य प्रयोजनमर्थः प्रयोजने

जन्यतायाः आश्रयता संबन्धेनान्वयः । समाप्तिशब्दस्य चरमवर्णध्वं सोर्थः तस्य प्रयोजने अभेदसंबन्धेनान्वयः तथाच मंगलनिरूपित जन्यताश्रयप्रयोजनं चरमवर्णध्वंसाभिन्नं इति विग्रहार्थः समासार्थस्तु चरमवर्णध्वंसाभिन्नप्रयोजनजनकमिति । निर्विघ्नपदार्थस्य जन्यतासंबन्धेनसमाप्तावन्वयः । ग्रन्थस्येति षष्ठ्यर्थघटकतायाः चरमवर्णेऽन्वयः। तथाच इच्छाविषयकृतिनिरूपित कर्मतावदभिन्न ग्रन्थनिरूपित घटकताश्रय विघ्ननिष्ठप्रतियोगिता निरूपकाभावजन्य चरमवर्णध्वंसाभिन्न प्रयोजनजनकाभिन्नं इति निर्विघ्नपरिसमाप्त्यर्थमित्यंतस्यार्थः । इष्टदेवतायाः नमस्कारः षष्ठ्याः विशेष्यतार्थः विशेष्यतायां इष्टदेवतायाः आधेयतासंबन्धेनान्वयः नमस्कारशब्दस्य अपकर्षावधित्वप्रकारक ज्ञानानुकूलव्यापारोर्थः तद्घटकज्ञाने विशेष्यतायाः निरूपकत्वसंबन्धेनान्वयः । नमस्कारः आत्मा यस्यतत् यच्छब्दस्य मंगलमर्थः षष्ठ्याः संबन्धोर्थः संबन्धे मंगलस्यानुयोगितासंबन्धेनान्वयः संबन्धस्य आत्मशब्दार्थस्वरूपेप्रतियोगितासंबन्धेनान्वयः नमस्कारस्य स्वरूपे अभेदसंबन्धेनान्वयः तथाच मंगलानुयोगिकसंबन्धप्रतियोगिस्वरूपं इष्टदेवतानिष्ठविशेष्यतानिरूपका पकर्षावधित्वप्रकारकज्ञानानुकूलव्यापाराभिन्नस्वरूप प्रतियोगिकसंबन्धानुयोगि इति समासार्थः। तस्य अभेदसंबन्धेन मंगलेऽन्वयः।नीत्युपसर्गपूर्वकबधिलधातोःनिबन्धनमर्थःनिबन्धनं च बोधानुकूलवर्णाभिव्यञ्जक रेखानुकूलव्यापारः। आख्यातस्य कृतिरर्थः कृतौ व्यापारस्य अनुकूलतासंबन्धेनान्यथः कृतेः आश्रयता संबन्धेन ग्रन्थकारेऽन्वयः। मंगलमिति द्वितीयायाः विषयतार्थः विषयतायाः निरूपकतासंबन्धेन निबन्धनघटकबोधे अन्वयः। शिष्याणां शिक्षा षष्ठ्याः आधेयतार्थः आधेयतायां शिष्यस्य निरूपितत्वसंबन्धेनान्वयः आधेयतायाः आश्रयतासंबन्धेन शिक्षापदार्थे अवश्यकर्तव्यत्वप्रकारकज्ञानेन्वयः। चतुर्थ्याः प्रयोजकत्वमर्थः प्रयोजकत्वे शिक्षा-

अत्र सप्तग्रहणं पदार्थत्वं द्रव्यादि सप्तान्यतमत्व व्याप्यमिति व्याप्तिलाभाय ।

---

याः निरूपितत्वसंबन्धेनान्वयः प्रयोजकतायाः आश्रयतासंबन्धेन निबन्धनेन्वयः। ग्रन्थतइति तसिल्प्रत्ययस्य घटकतार्थः घटकतायां ग्रन्थस्य निरूपितत्वसंबन्धेनान्वयः घटकतायाः आश्रयतासंबन्धेन निबन्धनघटकवर्णेन्वयः । तथाचायमखण्डबोधः इच्छाविषयकृति निरूपित कर्मतावदभिन्न ग्रन्थनिरूपित घटकताश्रय विघ्ननिष्ठप्रति-योगितानिरूपकाभावजन्य चरमवर्णध्वंसाभिन्न प्रयोजनजनकाभिन्नेष्ट देवतानिष्ठविशेष्यतानिरूपकापकर्षावधित्वप्रकारक ज्ञानानुकूलव्यापाराभिन्न स्वरूपप्रतियोगिकसंबंधानुयोग्यभिन्न मंगलनिष्ठविषयतानिरू-पक बोधानुकूलग्रन्थानिरूपकघटकताश्रय वर्णाभिव्यञ्जक रेखानुकूल-शिष्य निरूपिताधेयताश्रयशिक्षानिरूपित प्रयोजकताश्रय व्यापारानु-कूल कृतिमानिति । मंगलवादशाब्दबोधः समाप्तः ॥

ननु द्वंद्वान्ते श्रूयमाणप्रत्ययस्य द्वंद्वघटकतावत्पदार्थपर्याप्त संख्याबोधकत्वेन सप्तपदाभावेपि पदार्थेषु सप्तत्वस्याभावपदोत्तर बहुवचनेन लाभात् सप्तग्रहणं व्यर्थमित्याशंकां परिहरति । अत्र सप्तग्रहणमिति। व्याप्तिलाभायेति। व्याप्तेः लाभः षष्ठ्याः विषय-ताऽर्थः विषयतायां व्याप्तेः आधेयतासंबन्धेनान्वयः। विषय तायाः निरूपकतासंबन्धेन लाभपदार्थे निश्चये अन्वयः। तथाच व्याप्तिनिष्ठविषयतानिरूपकनिश्चयायेति समुदायार्थः । व्याप्तिनिश्च-याकारश्च यत्रयत्र पदार्थत्वं तत्रतत्र द्रव्यादिसप्तान्यतमत्वमिति। व्याप्तिनिश्चयप्रयोजनंतु अष्टमपदार्थो नास्तीति निश्चयएव । तत्प्र-कारश्च यदि अष्टमपदार्थस्स्यात् तदा उक्तव्याप्तिर्नसंभवति । पदार्थ त्वस्य अष्टमपदार्थे सत्त्वेन तत्र सप्तान्यतमत्वस्याभावात्। ननु उक्तव्या

ननु शक्तिपदार्थस्याष्टमस्य सत्त्वात्कथं सप्तैवेति। तथाहि मण्यादिसंयुक्ते इन्धनादौ सत्यपि वह्नि संयोगे दाहो न जायते। तच्छून्ये तु जायते।

अतो मणिसमवधाने दाहानुकूला शक्तिर्नश्यति। मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यते। तस्माच्छक्तिरतिरिक्तः पदार्थइति चेन्न॥

---

सिलाभाय सप्तग्रहणमित्यसंगतं। पदार्थत्वस्य शक्तौ सत्त्वेन तत्र सप्तान्यतमत्वस्याभावादुक्तव्याप्तेर्भङ्गात् इति भावेनाक्षिप्य शक्तिसाधनं प्रतिजानीते तथाहीति। हि येनप्रकारेण उपपादितं चेत् ज्ञातं भवेदिति पूरणीयं। तथा तेन प्रकारेण उपपादयिष्याम इति पूरणीयं। मणिः दाहानुकूलधर्मनाशकः दाहानुत्पत्तिकारणत्वात्। यत्रयत्र दाहानुत्पत्तिकारणत्वं तत्र दाहानुकूलधर्मनाशकत्वं। यथा वह्निकाष्ठविभागे। तथाच मणेः दाहानुत्पत्तिकारणत्वसत्त्वेन दाहानुकूलधर्मनाशकत्वमावश्यकमिति उक्तहेतौ स्वरूपासिद्धिदोषपरिहाराय दाहानुत्पत्तिकारणतानिश्चायकौ अन्वयव्यतिरेकसहचारौ दर्शयति। मण्यादिसंयुक्ते इत्यारभ्य तच्छून्येतु जायते इत्यन्तेन। अन्वयसहचारः कारणसत्त्वे कार्यसत्त्वं। व्यतिरेकसहचारः कारणाभावे कार्याभावः। प्रकृते मणिः कारणं। दाहानुत्पत्तिकारणत्वं कार्यं। उक्तानुमाने बाधशंकां परिहरति। मण्यभावेत्यादिना। शक्तिं प्रसाध्यातिरिक्तत्वं साधयति तस्मा दित्यादिना। तस्मात् उत्पत्तिविनाशसद्भावात्। अतः सामान्यादिचतुष्टयेनान्तर्भावइति पूरणीयं। शक्तेः द्रव्यादित्रिकेनान्तर्भावः। गुणत्वाद्यत्वादिति पूरणीयं। अतिरिक्तः द्रव्यत्वादिसप्तोपाध्यन्यतमशून्यः। दाहोनाम पूर्वरूपनाशः

मणेः प्रतिबन्धकत्वेन तदभावस्य कारणत्वेनैव निर्वाहे मण्यसमवधानसमवधानाभ्यां अनन्तशक्ति तत्प्रागभावध्वंसकल्पनाया अन्याय्यत्वात्। तस्मात् सप्तैव पदार्थाइति सिद्धं ॥

---

रूपान्तरोत्पत्तिर्वा। मणेः दाहानुत्पत्तिकारणत्वमस्तु दाहानुकूलधर्मनाशकत्वं मास्तु इति अप्रयोजकशंकायां यदि दाहानुकूलधर्मनाशकत्वं न स्यात् तर्हि दाहा नुत्पत्तिकारणत्वमपि नस्यात्। दाहानुत्पत्ति कारणत्वं प्रति दाहानुकूलधर्मनाशकत्वस्य प्रयोजकत्वात् इति अनुकूलतर्को वाच्यः। सच न संभवति। कार्यानुत्पत्तिकारणत्वं प्रति कार्यानुकूलधर्मनाशकत्वमेव न नियामकं। किंतु कार्यप्रति बन्धकत्वमपि नियामकं। प्रकृतेमणेः दाहानुत्पत्तिकारणत्वं प्रति दाहानुकूलधर्मनाशकत्वमेव न नियामकं दाहप्रतिबन्धकत्वमपि नियामकं भवति। एवंच मणेः दाहानुकूलधर्मनाशकत्वाभावेपि दाहप्रतिबन्धकत्वेनैव दाहानुत्पत्ति कारणत्वं संभवति। दाहानुत्पत्ति कारणत्वरूपहेतुः अनुकूलतर्का भावेनाप्रयोजकइत्याशयेनाह। मणेः प्रतिबन्धकत्वेनेत्यादिना। यदि साध्यं नस्यात् तर्हि हेतुरपि नस्यात् इत्यनुकूलतर्कानियामकंतु हेतुं प्रति साध्यस्य कारणत्वं प्रयोजकत्वंवा। निर्वाहइति। दाहानुत्पत्तिकारणत्वस्येत्यध्याहर्तव्यं। तथाच मणेः दाहप्रतिबन्धकत्वेनैव दाहानुत्पत्तिकारणत्वस्य निर्वाहे इति वाक्यार्थः संपद्यते। ननु मणेः दाहप्रतिबन्धकत्वं वह्नौ दाहा नुकूलशक्तिमन्तरा न संभवति। दाहप्रतिबन्धकत्वस्य दाहानुकूल धर्मनाशकत्वरूपत्वात् इत्याशंक्य दाहप्रतिबन्धकत्वं दाहकारणीभूता भावप्रतियोगित्वं नतु दाहानुकूलधर्मनाशकत्वं। दाहकारणीभूता

भावप्रतियोगित्वरूपप्रतिबन्धकत्वं मण्यभावस्य दाहंप्रति कारणता मपेक्षते। नतु वह्नौ दाहानुकूलशक्तिमपेक्षते। वह्निनिष्ठशक्तेः दाह प्रतिबन्धकतां प्रत्यकारणत्वात् इत्याशयेनाह तदभावस्य कारणत्वे नेति। अत्र दाहप्रतिबन्धकत्वस्येत्यध्याहारः। मणेरित्यस्यानुषंगः। तथाच मण्यभावस्य दाहंप्रति कारणत्वेनैव मणेः दाहप्रतिबन्धकत्व स्य निर्वाहे इति वाक्यार्थः। मणेः दाहानुत्पत्तिकारणत्वं मणेः दाहा नुकूलधर्मनाशकत्वमन्तराऽनुपपन्नं। दाहानुत्पत्तिकारणत्वंप्रति दाहा नुकूलधर्मनाशकत्वस्य कारणत्वात् इत्यर्थापत्तिप्रमाणेन शक्तिं सि- षाधयिषुः प्रथमतः दाहानुत्पत्तिकारणत्वं मीमांसको व्यवस्थापयति मण्यादिसंयुक्ते इन्धनादौ इत्यादिना। ननु यदि मणिः दाहानुकूल धर्मनाशकस्स्यात् तर्हि मणिसमवधानकाले दाहानुकूला वह्निनिष्ठा शक्तिर्यदि नश्यति तदा मण्यपसरणानन्तरं दाहो नस्यात्। दाहा- नुकूलायाः वह्निनिष्ठायाः शक्तेर्नाशात् इति बाधशंकां परिहरति मण्यभावदशायामित्यादिना। अर्थापत्तिप्रमाणस्यान्यथोपपत्तिमाह मणेः प्रतिबन्धकत्वेनेति। शेषमनुमानवत्। अर्थापत्तिर्नाम किंचि त्पदार्थसत्त्वं विना प्रमितस्यानुपपत्तिः अर्थापत्तिः। यथा दिवा अभुञ्जानस्य देवदत्तस्य रात्रिभोजनं विना पीनत्वमनुपपन्नं। अनु मानमेव प्रमाणं वाच्यं शक्तिसाधनविषये न प्रत्यक्षं। शक्तेरतीन्द्रि यत्वात्। नाप्युपमानं। उपमानस्य पदशक्तिमात्रसाधकत्वात्। नापि शब्दः। वादिवाक्ये अनाश्वासात्। नापि श्रुतिः। तस्याअ भावात्। अत्र केचित् मणेः दाहप्रतिबन्धकत्वं वह्नौ दाहानुकूल शक्तिमन्तरा नसंभवति। दाहप्रतिबन्धकत्वस्य दाहानुकूलधर्मनाश कत्वरूपत्वात् इत्यर्थापत्तिं शक्तिसद्भावे प्रमाणमभिप्रेत्य अर्थापत्ति परतया "मण्यादिसंयुक्तइन्धनादौ" इत्यादिग्रन्थं व्याचक्षते तद्व्या ख्यानं "दाहंप्रति मणेः प्रतिबन्धकत्वेनैव निर्वाहे इति ग्रन्थेन

विरुध्यते। तथाहि। अर्थापत्तौ दाहप्रतिबन्धकत्वं निर्वाह्यतया प्रविष्टं। सिद्धान्ते च मणेः प्रतिबन्धकत्वेन निर्वाह इति दाहप्रतिबन्धकत्वं निर्वाहकत्वेनाभिहितं। अतः उभयोर्विरोधात्कथमाख्यानं युक्तं। नच प्रतिबन्धकत्वेनेत्यत्राग्रेतनस्य निर्वाहइत्यस्य नानुषंगः। किंतु तदभावस्य कारणत्वेनेत्यत्र प्रतिबन्धकत्वेनेत्यस्य हेतुतयान्वयः। एवंच तदभावस्य कारकत्वं तस्य प्रतिबन्धकत्वेन निर्वहतीति नोक्तविरोधइति वाच्यं। एवं सत्यन्योन्याश्रयापत्तेः तथाहि मणेः दाहप्रतिबन्धकत्वं वह्नौ दाहानुकूलशक्त्यभावेपि मण्यभावस्य दाहं प्रति कारणत्वेनैव निर्वहतीति मणेः दाहप्रतिबन्धकत्वनिर्वाहाय वह्नौ शक्त्यंगीकारो निरर्थकः। दाहप्रतिबन्धकत्वस्य दाहकारणीभूताभावप्रतियोगित्वरूपत्वेन मण्यभावस्य दाहकारणत्वस्यैवापेक्षणात् इति सिद्धान्ताभिप्रायः। यदि प्रतिबन्धकत्वस्य तदभावकारणतायां हेतुत्वेनान्वयः तदा मणेःप्रतिबन्धकत्वं तदभावकारणतामपेक्षते। तदभावकारणताच मणेः प्रतिबन्धकत्वमपेक्षतइति भवत्येवान्योन्याश्रयदोषः। यदिच निर्वाहइत्यस्य मणिसमवधानकालीनदाहानुत्पादनिर्वाहइत्यर्थः। नतु प्रतिबन्धकत्वस्य निर्वाहइत्युच्यते तदा प्रतिबन्धकत्वस्य निर्वाह्यतया अर्थापत्तौ प्रवेशोऽनुपपन्नः स्यात्। तथाहि मणिसमवधानकालीनवह्निसमानाधिकरणदाहानुत्पत्तिः वह्नौ दाहानुकूलशक्तिमन्तरा नसंभवति। कारणसमानाधिकरणकार्यानुत्पादस्यकारणनिष्ठकार्यानुकूलशक्तिनाशाधीनत्वात्इत्यर्थापत्तिर्वाच्या। नचैवमस्त्विति वाच्यं। तथात्वे प्रतिबन्धकत्वान्यथानुपपत्तिरूपार्थापत्तिकथनस्यासांगत्यापत्तेः। शक्त्यंगीकारे गौरवमप्यधिकं दूषणमाह अनन्तेति। अन्याय्यत्वात् युक्तिरहितत्वात्। इति शक्तिवादः समाप्तः॥

अथ तमोवादः। तमः द्रव्यं नीलरूपाश्रयत्वात् क्रियाश्रयत्वात्। यत्रयत्र रूपाश्रयत्वं तत्र द्रव्यत्वं यथा घटे इत्यनुमानं

नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैवेति। तथाहि। नीलं तमश्चलतीति प्रतीत्या नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च तमसो द्रव्यत्वं सिद्धम् ॥

तमसो रूपवत्त्वात् आकाशादिपञ्चकस्य नीरूपत्वात् वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः। तमसो निर्गन्धत्वात् पृथिव्या गन्धवत्त्वान्न तत्रान्तर्भावः। तमसो निस्स्पर्शत्वात् जलतेजसोः शीतोष्णस्पर्शवत्त्वात् न तयोरन्तर्भावः ॥

---

तमसो द्रव्यत्वे प्रमाणमभिप्रेत्य नीलरूपाश्रयत्वहेतौ प्रत्यक्षं प्रमाणयन् तमसो द्रव्यत्वं साधयति ॥

नीलं तमइति। नीलरूपाश्रयत्वेनेत्यत्र तृतीयार्थः ज्ञानजन्यत्वं। तस्य आश्रयतासंबन्धेन सिधुधात्वर्थेनिश्चयेऽन्वयः। क्तप्रत्ययस्य प्रकारतावदर्थः। एकदेशप्रकारतायां निश्चयस्य निरूपितत्व संबन्धेनान्वयः। तमसइति षष्ठ्यर्थः विशेष्यता। विशेष्यतायां तमसः आधेयतासंबन्धेनान्वयः। विशेष्यताया निरूपकतासंबन्धेन निश्चयेऽन्वयः। नीलरूपाश्रयत्वस्य विषयतासंबन्धेन तृतीयार्थघटकज्ञानेऽन्वयः। तथाच नीलरूपाश्रयत्वविषयकज्ञानजन्यत्वाश्रयतमोनिष्ठविशेष्यतानिरूपकनिश्चयनिरूपित प्रकारतावदभिन्नं द्रव्यत्वमिति शाब्दबोधः। तमसो द्रव्यत्वं प्रसाध्यातिरिक्तत्वं व्यवस्थापयति ॥

तमसोरूपवत्त्वादित्यादिना। तमः आकाशादिपंचकानन्तर्भूतं रूपवत्त्वात्। तमः वायुवृत्त्यसाधारणधर्मशून्यं रूपवत्त्वात् सदागतिमत्त्वाभावाच्च। तमः पृथिवीवृत्त्यसाधारणधर्मशून्यं गन्धशून्यत्वात्। तमः जलतेजोवृत्त्यसाधारणधर्मशून्यं स्पर्शशून्यत्वात्। आकाशादिवत्।

तमसि नैल्यप्रतीतिस्तु भ्रान्तिरेव । एवं कर्मवत्ता प्रतीतिरपि दीपापसरणक्रियाया एव तत्र भानात् ॥

तमसि नैल्यप्रतीतिस्तु भ्रान्तिरेवेति । अत्रायमाशयः चक्षुः यस्मिन्देशे विषयं न गृह्णाति तत्र नैल्यप्रतीतिं जनयति । अतएव आकाशे नैल्यभ्रमः । कर्मवत्ताप्रतीतिरपीति । यथामेघे चलति सति चन्द्रमसि चलनप्रतीतिः तथा दीपे अपसरति सति तमसि चलनप्रतीतिर्भवति । तमोवादः समाप्तः ॥

पृथिवीं लक्षयतीति । णिजन्तलक्षधातोः लक्षणप्रकारकज्ञानजनकशब्दोर्थः । आख्यातस्य कृतिरर्थः । कृतौ शब्दस्यानुकूलतासंबन्धेनान्वयः । पृथिवीमिति द्वितीयायाः विशेष्यतार्थः । विशेष्यतायां पृथिव्याः आधेयतासंबन्धेनान्वयः । विशेष्यतायाः निरूपकतासंबन्धेन ज्ञानेऽन्वयः । कृतेः आश्रयतासंबन्धेन ग्रन्थकारेऽन्वयः । तथाच पृथिवीनिष्ठविशेष्यतानिरूपकलक्षणप्रकारकज्ञानजनकशब्दानुकूलकृत्याश्रयो ग्रन्थकारः इत्यखण्डबोधः । गन्धनिष्ठाधेयतानिरूपकाधिकरणताश्रयत्वं पृथिव्या लक्षणं । पृथिव्यां समवायसंबन्धेन गन्धो वर्तते । गन्धः आधेयः । आधेयता गंधनिष्ठा । आधेयतायां समवायसंबन्धोऽवच्छेदकः । येनसंबन्धेन यद्वर्तते तन्निष्ठाधेयतायां तत्संबन्धोऽवच्छेदक इति न्यायात् । प्रकृते येन संबन्धेन समवायसंबन्धेन । यद्गन्धः वर्तते । तन्निष्ठाधेयतायां तत्संबन्धः समवायसंबन्धः अवच्छेदकः । यः संबन्धो यस्यां अवच्छेदकः सा तत्संबन्धावच्छिन्ना । यः संबन्धः समवायरूपः संबन्धः । यस्यां गन्धनिष्ठाधेयतायां अवच्छेदकः । सा गन्धनिष्ठाधेयता । तत्संबन्धावच्छिन्ना समवायसंबन्धावच्छिन्ना । गन्धनिष्ठाधेयतानिरूपकाधिकरणताश्रयत्वं पृथिव्यामेव संभवति । नकाले । कालिकसंबन्धेनैव गन्धः काले वर्तते । नसमावायसंबन्धेन । तथाच गन्धः आधेयः ।

एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति रूप रहितेति ॥

---

आधेयता गन्धनिष्ठा आधेयतायां कालिकसंबन्धोऽवच्छेदकः नतु समवायसंबन्धः। समवायसंबन्धेन काले गन्धस्यावर्तनात्। येन संबन्धेन कालिकसंबन्धेन यद्गन्धः वर्तते। तन्निष्ठाधेयतायां तत्सं बन्धः कालिकसंबन्धः अवच्छेदकः यः संबन्धो यस्यां अवच्छेदकः सा तत्संबन्धावच्छिन्ना। यः संबन्धः कालिकसंबन्धः। यस्यां गन्धनिष्ठाधेयतायां अवच्छेदकः। सा गन्धनिष्ठाधेयता तत्संबन्धा वच्छिन्ना कालिकसंबन्धावच्छिन्ना। तथाच कालिकसंबन्धावच्छिन्न गन्धनिष्ठाधेयतानिरूपकाधिकरणताश्रयत्वं कालस्य संभवति। नतु समवायसंबन्धेत्यादिलक्षणं। अतः काले अतिव्याप्तिवारणाय गन्ध निष्ठाधेयतायां समवायसंबन्धावच्छिन्नत्वं निवेशनीयम्।

पृथिव्यादित्रिकं निरूप्येति। नीत्युपसर्गपूर्वकरूपधातोः निरूपणमर्थः। निरूपणं नाम लक्षणस्वरूपप्रामाण्याद्यन्यतमप्रकारक-ज्ञानजनकशब्दः। पृथिव्यादित्रिकमिति द्वितीयायाः विशेष्यताऽर्थः। विशेष्यतायां पृथिव्यादित्रिकस्याधेयतासंबन्धेनान्वयः। विशेष्य-तायाः निरूपकतासंबन्धेन निरूपशब्दार्थैकदेशज्ञाने अन्वयः। ल्यप्प्रत्ययस्य उत्तर कालीनत्वमर्थः। उत्तरकालीनत्वं च ध्वंसाधि-करणकालवृत्तित्वं। एकदेशध्वंसे शब्दस्य प्रतियोगितासंबन्धेनान्वयः। वायुं निरूपयतीत्यत्र निपूर्वकरूपधातोः निरूपणमर्थः। आख्या-तस्य कृतिरर्थः उत्तरकालीनत्वस्य आश्रयतासंबन्धेन निपूर्वकरूप-धात्वर्थनिरूपणेऽन्वयः। निरूपणस्य अनुकूलतासंबन्धेन आख्यातार्थ कृतावन्वयः कृतेराश्रयतासंबन्धेन ग्रन्थकारेऽन्वयः। वायुमिति द्विती-यार्थः विशेष्यता। तस्यां वायोः आधेयतासंबन्धेनान्वयः। विशेष्य-तायाः निरूपकतासंबंधेन रूपधात्वर्थघटकज्ञानेऽन्वयः। तथाच पृथि

## रूपरहितस्पर्शवान्वायुः ॥

वायुसमानाधिकरणत्वमित्यादि त्रिकनिष्ठविशेष्यतानिरूपकलक्षणस्वरूपप्रामाण्याद्यन्यतमप्रकारकज्ञानजनकशब्दप्रतियोगिकध्वंसाधिकरणकालवृत्तित्वाश्रयवायुनिष्ठविशेष्यतानिरूपकलक्षणस्वरूपप्रामाण्याद्यन्यतमप्रकारकज्ञानजनकशब्दानुकूलकृत्याश्रयः ग्रन्थकारः इत्यखण्डः शाब्दबोधः ।

रूपेण रहितः रूपरहितः तृतीयायाः प्रतियोगिताऽर्थः । प्रतियोगितायां रूपस्य आधेयतासंबंधेनान्वयः । तथाच रूपनिष्ठप्रतियोगितेत्यासीत् । रहधातोः अभावोर्थः । अभावे प्रतियोगितायाः निरूपकत्वसंबन्धेनान्वयः । तथाच रूपनिष्ठप्रतियोगितानिरूपकाभावः । क्तप्रत्ययस्य आश्रयतावानर्थः । आश्रयतायां अभावस्य निरूपितत्वसंबन्धेनान्वयः । तथाच रूपनिष्ठप्रतियोगितानिरूपकाभावनिरूपिताश्रयतावान् वायुः । स्पर्शः अस्मिन् अस्तीति स्पर्शवान् । इदंशब्दस्य वायुरर्थः । सप्तम्याः अधिकरणतार्थः । अधिकरणतायां वायोः आधेयतासंबंधेनान्वयः । तथाच वायुनिष्ठाधिकरणता । असधातोः आधेयतार्थः । आख्यातस्याश्रयोऽर्थः आधेयतायां अधिकरणतायाः निरूपितत्वसंबंधेनान्वयः । तथाच वायुनिष्ठाधिकरणतानिरूपिताधेयताश्रयः स्पर्शः इति विग्रहार्थः । समासार्थस्तु स्पर्शनिष्ठाधेयतानिरूपकाधिकरणताश्रयः वायुः । तथा च रूपनिष्ठप्रतियोगितानिरूपकाभावाश्रयत्वे सति स्पर्शनिष्ठाधेयतानिरूपकाधिकरणताश्रयत्वं वायोर्लक्षणं । रूपनिष्ठप्रतियोगितायां रूपत्वावच्छिन्नत्वं निवेशनीयं । अन्यथा पृथिव्यादित्रिके अतिव्याप्तिः । कथमितिचेत् रूपनिष्ठप्रतियोगितानिरूपको योऽभावः रूपघटोभयाभावः । उभयाभावस्य उभयं प्रतियोगि । प्रतियोगिता उभयनिष्ठा रूपनिष्ठापि भवति । तादृशप्रतियोगितानिरूपकः रूपघटोभयाभावः पृथिव्यादित्रिके वर्तते । अतः अतिव्याप्तिः प्रस-

सामानाधिकरण्यसंबंधेन रूपत्वावच्छिन्नप्रतियोगि ताकाभावविशिष्टस्पर्शवत्त्वं लक्षणमिति फलितार्थः ॥

ज्जते। प्रतियोगितायां रूपत्वावच्छिन्नत्वनिवेशे नातिव्याप्तिः। रूप त्वावच्छिन्नप्रतियोगिता निरूपको योऽभावः रूपाभावएव। नतु रूप घटोभयाभावः। कथमित्युक्तौ उभयाभावस्य उभयं प्रतियोगि। प्रतियोगिता उभयनिष्ठा। प्रतियोगितावच्छेदकं उभयत्वं। उभयत्वावच्छिन्ना सा प्रतियोगिता। नतु रूपत्वावच्छिन्ना। अतः नातिव्याप्तिः। प्रतियोगितायां समवायसंबंधावच्छिन्नत्वं निवेशनीयं। अन्यथा संयोगेन रूपाभावमादाय घटादौ अतिव्याप्तिः। तथाहि संयोगेन रूपाभावस्य रूपं प्रतियोगि। प्रतियोगिता रूप निष्ठा। प्रतियोगितावच्छेदकं रूपत्वं। रूपत्वावच्छिन्नप्रतियोगि तानिरूपकः संयोगेन रूपाभावः। तथाच रूपत्वावच्छिन्नप्रतियोगि तानिरूपकोऽभावः घटादौ वर्ततएवेति तद्वारणाय रूपनिष्ठप्रतियोगि तायां समवायसंबंधावच्छिन्नत्वं निवेशनीयं। तन्निवेशे च नाति व्याप्तिः। समवायसंबंधावच्छिन्नरूपत्वावच्छिन्नप्रतियोगितानिरूप को योऽभावः समवायेन रूपाभावः। नतु संयोगेन रूपाभावः। संयोगेन रूपाभावस्य रूपं प्रतियोगि। प्रतियोगिता रूपनिष्ठा। प्रतियोगितावच्छेदकसंबंधः संयोगः। संयोगसंबंधावच्छिन्ना सा प्रतियोगिता। नतु समवायसंबंधावच्छिन्ना। अतो नातिव्याप्तिः।

सामानाधिकरण्यसंबंधेनेति। स्वाधिकरणवृत्तित्वं सामानाधिकरण्यं। रूपाभावविशिष्टं स्पर्शवत्त्वमित्यत्र स्वपदेन रूपाभावो ग्राह्यः। यद्वैशिष्ट्यं यत्रोपपादनीयं तत् स्वपदेन ग्राह्यं। प्रकृते रूपाभाववैशिष्ट्यं स्पर्शवत्त्वे उपपादनीयं। अतः स्वपदेन रूपाभावो ग्राह्यः। स्वं रूपाभावः। स्वाधिकरणं वायुः। तद्वृत्तित्वं स्पर्शवत्त्वस्य। स्वाधिकरणवृत्तित्वसंबंधेन रूपाभावविशिष्टं स्पर्शवत्त्वं भवति।

**अतिव्याप्तिर्नाम अलक्ष्ये लक्षणस्य सत्त्वं । यथा गोः शृंगित्वं लक्षणमुक्तंचेत् अलक्ष्यभूतगोभिन्नमहिषादावतिव्याप्तिः । तत्रापि शृंगित्वस्य सत्त्वात् ॥**

अतिव्याप्तिर्नामेति । अलक्ष्ये लक्ष्यभिन्ने । सप्तम्यर्थः निरूपितत्वं । तस्य आश्रयतासंबंधेन सत्त्वशब्दार्थे आधेयत्वे अन्वयः । तथाच लक्ष्यभिन्ननिरूपिताधेयत्वं अतिव्याप्तिर्दोषः अतिव्याप्तिदुष्टस्य लक्षणं । गोः शृङ्गित्वं लक्षणमित्यत्र शृङ्गित्वमतिव्याप्तिदुष्टं । तस्येदं लक्षणं संभवति । लक्ष्या गौः । लक्ष्यभिन्नं माहिषः । तद्वृत्ति शृङ्गित्वं । तद्वृत्तित्वं शृङ्गित्वस्य । लक्ष्यभिन्ननिरूपिताधेयतायां लक्षणतावच्छेदकसंबंधावच्छिन्नत्वं निवेशनीयं । अन्यथा गोः सास्नादिमत्त्वं लक्षणमित्यत्र सास्नादिमत्त्वे अतिव्याप्तिः । लक्ष्यभिन्नो माहिषः । तत्र सास्नादिमत्त्वं कालिकसंबंधेन वर्तते । जन्यानां कालोपाधित्वमिति न्यायेन जन्यमात्रं कालिकसंबंधेन सर्वे वर्तते । अतः सास्नादिमत्त्वमपि वर्तते । आधेयं सास्नादिमत्त्वं । आधेयता सास्नादिमत्त्वनिष्ठा सा आधेयताच लक्ष्यभिन्ननिरूपिता । आधेयतायाः अधिकरणनिरूपितत्वात् । लक्ष्यभिन्नमाहिषस्य अधिकरणत्वात् । आधेयतायां लक्षणतावच्छेदकसंबंधावच्छिन्नत्वनिवेशे नातिव्याप्तिसंभवः । कालिकसंबंधेन सास्नादिमत्त्वं माहिषे वर्तते । आधेयं सास्नादिमत्त्वं । आधेयता सास्नादिमत्त्वनिष्ठा । आधेयतायां कालिकसंबंधोऽवच्छेदकः । येन संबंधेन यद्वर्तते । तन्निष्ठाधेयतायां तत्संबन्धोऽवच्छेदकः । येन संबन्धेन कालिकसंबन्धेन । यत् सास्नादिमत्त्वं वर्तते । तन्निष्ठाधेयतायां सास्नादिमत्त्वनिष्ठाधेयतायां तत्संबन्धः कालिकसंबन्धः अवच्छेदकः । सास्नादिमत्त्वनिष्ठाधेयता कालिकसंबन्धावच्छिन्ना । नतु लक्षणतावच्छेदकसंबन्धावच्छिन्ना । लक्षणतावच्छेदकसंबन्धः समवायसंबन्धः ।

अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वं। लक्ष्यतावच्छेदकाश्रये क्वचिल्लक्ष्ये लक्षणासत्त्वमेवाव्याप्तिरित्यर्थः। यथा गोः कपिलत्वं लक्षणमुक्तंचेत् श्वेतगवि कपिलत्वाभावादव्याप्तिः॥

असंभवोनाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वं। यथा गोरेकशफवत्त्वं लक्षणमुक्तं चेत् गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वादसंभवः॥

---

लक्ष्यैकदेशावृत्तित्वमिति। लक्ष्यस्य एकदेशः लक्ष्यैकदेशः। लक्ष्यैकदेशे अवृत्तित्वं लक्ष्यैकदेशावृत्तित्वं। एकदेशशब्दार्थः घटकतावान्। लक्ष्यस्येति षष्ठ्यर्थः निरूपितत्वं। निरूपितत्वस्य आश्रयतासंबन्धेन घटकतायामन्वयः। अवृत्तित्वंनाम आधेयत्वाभावः। आधेयतायां एकदेशशब्दार्थस्य निरूपितत्वसंबन्धेनान्वयः। तथाच लक्ष्यनिरूपितघटकताश्रयनिरूपिताधेयत्वाभावः अव्याप्तिः। गोः कपिलत्वं लक्षणमित्यत्र कपिलत्वं अव्याप्तिदुष्टं। तत्रोक्ताव्याप्तिलक्षणं वर्तते। लक्ष्यं गोसमुदायः। तद्घटिका श्वेतगौः तद्वृत्ति श्वेतरूपं। आधेयता श्वेतरूपनिष्ठा। आधेयताच लक्ष्यैकदेशश्वेतगोनिरूपिता। आधेयत्वाभावः कपिलत्वे। कपिलत्वस्य श्वेतगवि अभावात्। आधेयतायां लक्षणतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयं। अन्यथा कपिलत्वे अव्याप्तिरूपे अव्याप्तिदुष्टलक्षणस्य असंभवापत्तेः। लक्ष्यैकदेशे श्वेतगवि कपिलत्वस्य कालिकसंबन्धेन सत्त्वात्। कपिलत्वनिष्ठाधेयतायाः श्वेतगोनिरूपितत्वात्। लक्षणतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे नासंभवः। कपिलत्वनिष्ठश्वेतगोनिरूपिताधेयतायाः कालिकसंबन्धावच्छिन्नत्वेपि लक्षणतावच्छेदकीभूतसमवायसंबन्धावच्छिन्नत्वाभावात्॥

लक्ष्यमात्रइति। मात्रपदं यावदर्थकं।

सप्तम्याः निरूपितत्वमर्थः। तस्य असत्त्वशब्दार्थाधेयत्वाभावघटकाधेयतायामन्वयः। तथाच यावल्लक्ष्यनिरूपिताधेयत्वाभावः असंभव इति समुदायार्थः। गोः एकशफवत्त्वं लक्षणमित्यत्र एकशफवत्त्वं असंभवदुष्टं। तस्यासंभवरूपलक्षणं संभवति। एकशफवत्त्वस्य क्वचिदपि गव्यसत्त्वात्। यावल्लक्ष्यनिरूपिताधेयत्वाभावस्य एकशफवत्त्वे संभवात्। शफे एकत्वंच शफविशिष्टान्यत्वं। शफवैशिष्ट्यंच स्वाधिकरणवृत्तित्व स्वाभिन्नत्वोभयसंबन्धेन। एतादृशैकत्वं अश्वनिष्ठशफस्य भवति नतु गोनिष्ठशफस्य। उक्तसंबन्धेन गोनिष्ठ शफस्य शफान्तरविशिष्टत्वात्। स्वपदेन गोनिष्ठशफोपादाने स्वाधिकरणं गोपादः। तद्वृत्ति शफान्तरं। वृत्तित्वं शफान्तरस्य। स्वभिन्नत्वमपि शफान्तरस्येति उभयसंबन्धेन गोनिष्ठशफस्य शफान्तर विशिष्टत्वात् निरुक्तैकत्वं नसंभवति। लक्ष्यतावच्छेदकसमानाधिकरणत्वेसति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगितानिरूपकभेदाधिकरणवृत्तित्वं अतिव्याप्तिदोषस्य स्वरूपं। अतिव्याप्तिदुष्टस्य लक्षणं। गोः शृङ्गित्वं लक्षणमित्यत्र शृङ्गित्वमतिव्याप्तिदुष्टं। तस्येदं लक्षणं संभवति। लक्ष्या गौः लक्ष्यता गोनिष्ठा। लक्ष्यतावच्छेदकं गोत्वं। लक्ष्यतावच्छेदकाधिकरणं गौः। तद्वृत्ति शृङ्गित्वं। वृत्तित्वं शृङ्गित्वस्य। एवं विशेष्यदळमपि संभवति। लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगितानिरूपकः कोभेदः इत्युक्तौ गोभेदो भवति। कथमित्युक्तौ गोभेदस्य गौः प्रतियोगी प्रतियोगिता गोनिष्ठा। प्रतियोगितावच्छेदकं गोत्वं। गोत्वावच्छिन्ना प्रतियोगिता। तथाचेत् लक्ष्यतावच्छेदकावच्छिन्नापि भवति। लक्ष्यतावच्छेदकस्य गोत्वस्य च एकत्वात्। लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगितानिरूपकभेदः गोभेदः। गोभेदाधिकरणं महिषः। तद्वृत्ति शृङ्गित्वं। तद्वृत्तित्वं शृङ्गित्वस्येति लक्षणसंगतिः। लक्ष्यतावच्छेदकाधिकरणवृत्तित्वमात्रोक्तौ गोः सास्नादिमत्त्वे सल्लक्षणे अतिव्याप्तिः। अतः विशेष्य

## शब्दगुणकमाकाशं । तच्चैकं विभु नित्यंच ॥

दळं । विशेष्यदळमात्रोक्तौ गोः एकशफवत्त्वं लक्षणमित्यत्र एकशफवत्त्वे असंभविनि अतिव्याप्तिः। कुतः लक्ष्यभिन्नवृत्तित्वात्। लक्ष्यतावच्छेदकाधिकरणवृत्तित्वेसति लक्ष्यतावच्छेदकाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वं अव्याप्तिदोषस्य स्वरूपं । गोः नीलरूपवत्त्वं लक्षणमित्यत्र नीलरूपवत्त्वं अव्याप्तिदुष्टं। अस्येदं लक्षणं संभवति। लक्ष्या गौः। लक्ष्यता गोनिष्ठा। लक्ष्यतावच्छेदकं गोत्वं। लक्ष्यतावच्छेदकाधिकरणं गौः। तद्वृत्ति नीलरूपवत्वं। तद्वृत्तित्वं नीलरूपवत्वस्य। एवं विशेष्यदळमपि संभवति। लक्ष्या गौः। लक्ष्यतावच्छेदकं गोत्वं। लक्ष्यतावच्छेदकाधिकरणं श्वेतगौः। लक्ष्यतावच्छेदकाधिकरणवृत्तिः योऽत्यन्ताभावः नीलरूपवत्त्वात्यन्ताभावः। तत्प्रतियोगि नीलरूपं। प्रतियोगित्वं नीलरूपवत्त्वस्य। लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वं असंभवदोषस्य स्वरूपं। असंभवदुष्टस्य लक्षणं। लक्ष्यतावच्छेदकव्यापकत्वंच लक्ष्यतावच्छेदकाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वं। गोः एकशफवत्त्वं लक्षणमित्यत्र एकशफवत्त्वमसंभवदुष्टं। तस्येदं लक्षणं संभवति। लक्ष्या गौः लक्ष्यता गोनिष्ठा। लक्ष्यतावच्छेदकं गोत्वं। लक्ष्यतावच्छेदकव्यापको योऽभावः एकशफवत्त्वाभावः। तत्प्रतियोगि एकशफवत्त्वं। तत्प्रतियोगित्वं एकशफवत्त्वस्य। एकशफवत्त्वाभावस्य निरुक्तलक्ष्यतावच्छेदकव्यापकत्वं संभवति। तथाहि। लक्ष्यतावच्छेदकं गोत्वं। लक्ष्यतावच्छेदकाधिकरणं गौः। तद्वृत्तिर्योत्यन्ताभावः घटात्यन्ताभावः। नतु एकशफवत्त्वाभावाभावः। एकशफवत्त्वाभावस्यैव तत्र सत्त्वात्। तत्प्रतियोगी घटः। अप्रतियोगी एकशफवत्त्वाभावः। अप्रतियोगित्वं एकशफवत्त्वाभावस्य ॥

शब्दगुणकमिति। शब्दो गुणो यस्य तत्। यच्छब्दस्य आकाशमर्थः। षष्ठ्याः आधेयतार्थः। आधेयतायां आकाशस्य

निरूपितत्वसंबन्धेनान्वयः । आधेयतायाः गुणे आश्रयतासंबन्धेनान्वयः । गुणे शब्दस्य अभेदसंबन्धेनान्वयः । तथाच आकाशनिरूपिताधेयताश्रयगुणः शब्दाभिन्नः इति विग्रहार्थः । समासार्थस्तु शब्दाभिन्नगुणनिष्ठाधेयतानिरूपकं आकाशं इति । गुणपदं आकाशे प्रमाणसूचनाय । तथाहि । शब्दः किंचिद्द्रव्याश्रितः गुणत्वात् रूपवत् । इतरद्रव्याणां पृथिव्यादीनां शब्दाश्रयत्वासंभवात् अतिरिक्ताकाशसिद्धिः । समवायसंबन्धावच्छिन्नशब्दनिष्ठाधेयतानिरूपकाधिकरणताश्रयत्वं आकाशस्य लक्षणं । आधेयतायां समवायसंबन्धावच्छिन्नत्वं निवेशनीयं । अन्यथा काले अतिव्याप्तिः । सर्वाधारः काल इति न्यायेन काले कालिकसंबन्धेन सर्वस्य सत्त्वात् । शब्दोपि वर्तते । आधेयः शब्दः । आधेयता शब्दनिष्ठा । तस्यां कालिकसंबन्धोऽवच्छेदकः । अधिकरणं कालः । अधिकरणता कालनिष्ठा । अधिकरणता आधेयताया निरूपिका भवति । तथाच शब्दनिष्ठाधेयतानिरूपकाधिकरणताश्रयत्वस्य काले सत्त्वात् भवत्यातिव्याप्तिः । समवायसंबन्धावच्छिन्नत्वनिवेशे नातिव्याप्तिः । शब्दनिष्ठकालनिरूपिताधेयतायाः कालिकसंबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावात् ।

विभु सर्वमूर्त्तद्रव्यसंयोगि । सर्वपदमनुपादाय मूर्तद्रव्यसंयोगित्वं विभोर्लक्षणमित्युक्तौ घटात्मकमूर्तद्रव्यसंयोगस्य पृथिव्यादौ सत्त्वात् तत्रातिव्याप्तिः । तद्वारणाय सर्वपदं । मूर्तपदानुपादाने सर्वद्रव्यान्तर्गतकालसंयोगस्य आकाशे असत्त्वादसंभवः । विभुद्वयसंयोगस्यानंगीकारात् । अतः मूर्तपदं । मूर्तद्रव्यपदानुपादाने सर्वान्तर्गतगुणसंयोगस्याप्रसिद्ध्या असंभवः । तद्वारणाय मूर्तद्रव्यपदं । ननु इदं लक्षणं असंभावि । सर्वमूर्तद्रव्यप्रतियोगिकस्यैकस्य संयोगस्याभावात् इति चेत् न । मूर्तद्रव्यत्वव्यापकत्वस्य विभुलक्षणत्वात् । व्यापकता च संयोगसंबन्धेन । संभवतिचेदं लक्षणमाकाशस्य ।

## अतीतादिव्यवहारहेतुःकालः ॥

आकाशसंयोगशून्यस्य मूर्तद्रव्यस्याभावात् । अतो मूर्तद्रव्यत्वव्यापकमाकाशं भवति । यदि च आकाशसंयोगस्य वृत्त्यनियामकतया संयोगसंबन्धेन आकाशस्य व्यापकत्वासंभवात् नोक्तलक्षणं संभवतीत्युच्यते तदा स्वनिष्ठप्रतियोगितानिरूपकात्यन्ताभाववत्त्वसंबन्धेन व्यापकत्वं विवक्षणीयं । स्वनिष्ठप्रतियोगिता च स्वानुयोगिकसंयोगशून्यत्वसंबन्धावच्छिन्ना । एवंच आकाशस्य व्यापकत्वमुपपद्यते । तथाहि । भूतले संयोगसंबन्धेन घटः यथा वर्तते एवं विषयतासंबन्धेन ज्ञाने वर्तते । तथा भूतले घटाभावदशायां घटः स्वनिष्ठप्रतियोगितानिरूपकाभाववत्त्वसंबन्धेन भूतले वर्तते । स्वं घटः । स्वनिष्ठप्रतियोगितानिरूपकोयोऽभावः घटाभावः तद्वत्त्वं भूतलस्य । एवं स्वानुयोगिकसंयोगशून्यत्वसंबन्धेन आकाशं सर्वमूर्तद्रव्येषु नास्ति । किंतु आकाशाभावो वर्तते । आकाशाभावस्य प्रतियोगि आकाशं । प्रतियोगिता आकाशनिष्ठा । प्रतियोगितायां स्वानुयोगिकसंयोगशून्यत्वसंबन्धः अवच्छेदकः । प्रतियोगिता स्वानुयोगिकसंयोगशून्यत्वसंबन्धावच्छिन्ना । इत्थंच स्वानुयोगिकसंयोग शून्यत्वसंबन्धावच्छिन्नाकाशनिष्ठप्रतियोगितानिरूपकाभावः सर्वमूर्त द्रव्येषु वर्तत इति स्वानुयोगिकसंयोगशून्यत्वसंबन्धावच्छिन्नस्वनिष्ठ प्रतियोगितानिरूपकाभाववत्त्वसंबन्धेन आकाशस्य सर्वमूर्तद्रव्येषु सत्त्वात् आकाशस्य मूर्तद्रव्यत्वव्यापकत्वं नानुपपन्नं । एकं स्वसजातीयद्वितीयरहितं । साजात्यं च स्ववृत्त्यसाधारणधर्मरूपेण ॥

अतीतेति । अतीतादीनां व्यवहारः अतीतादिव्यवहारः । व्यवहारस्य हेतुः व्यवहारहेतुः । षष्ठ्याः विषयतार्थः । विषयतायां अतीतादेः आधेयतासंबन्धेनान्वयः । विषयतायाः व्यवहारे निरूपकतासंबन्धेनान्वयः । व्यवहारस्येति षष्ठ्याः जन्यतार्थः । जन्यतायां व्यवहारस्य आधेयतासंबन्धेनान्वयः । हेतुशब्द

स्य जनकतावानर्थः। जनकतायां जन्यतायाः निरूपितत्वसंबन्धे नान्वयः। अतीतादिनिष्ठविषयतानिरूपकव्यवहारनिष्ठजन्यतानिरूपितजनकतावान् कालः। अतीतादिनिष्ठविषयतानिरूपकव्यवहारनिष्ठजन्यतानिरूपितजनकतावत्त्वं कालस्य लक्षणं। अत्र आदिपदेन वर्तमानः भविष्यंश्च ग्राह्यः। अतीतादिनिष्ठविषयतानिरूपको यो व्यवहारः अयमतीतः अयंवर्तमानः अयंभविष्यन् इति व्यवहारः। तादृशव्यवहारंप्रति कालः कारणं। व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वात्। यथा धनवानिति व्यवहारे धनवान् व्यवहर्तव्यः। व्यवहर्तव्यता धनवन्निष्ठा। व्यवहर्तव्यतावच्छेदकं धनवत्त्वं। धनवत्त्वं च धनमेव। मतुप्प्रत्ययान्तपदोत्तरं श्रूयमाण भावप्रत्ययः मतुप्प्रत्ययप्रकृत्यर्थं बोधयति। धनवानिति व्यवहारे धनवानिति पदं मतुप्प्रत्ययान्तं। तदुत्तरं श्रूयमाणः भावप्रत्ययः त्वप्रत्यः। सच मतुप्प्रत्ययस्य या प्रकृतिः धनेतिप्रकृतिः। तदर्थंधनं बोधयति। तथा प्रकृते अतीतकालवानिति व्यवहारे अतीतकालवत्पदं मतुप्प्रत्ययान्तं। तदुत्तरंत्वप्रत्ययः। मतुप्प्रत्ययः तत्प्रकृतिभूतं अतीतकालपदं। तदर्थं कालं बोधयति। एवंच अतीतादिव्यवहारहेतुत्वस्य काले विद्यमानत्वात् लक्षणसंगतिः। ननु व्यवहारं प्रति व्यवहर्तव्यतावच्छेदकज्ञानं कारणं। ननु व्यवहर्तव्यतावच्छेदकं। धनवति पुरुषे धनज्ञानाभावे धनवानिति व्यवहारानुत्पादात्। अतः अतीतादिव्यवहारहेतुत्वं अतीतादिव्यवहारज्ञानस्यैव। अतः उक्तलक्षणस्य काले अभावादसंभवः इति चेत् न। अतीतादिव्यवहारकारणज्ञानविषयत्वस्य काललक्षणत्वांगीकारात्। अतीतादिव्यवहारकारणं यज्ज्ञानं कालविषयकं ज्ञानं। तद्विषयत्वस्य काले सत्त्वान्नासंभवः। एवं दिग्लक्षणेपि बोध्यं।

ज्ञानाधिकरणमिति। ज्ञानस्य अधिकरणं ज्ञानाधिकरणं षष्ठ्याः आधेयतार्थः। आधेयतायां ज्ञानस्य आधेयतासंबन्धेनान्वयः।

ज्ञानाधिकरणमात्मा। सद्विविधः परमात्मा जीवात्मा चेति। तत्रेश्वरः सर्वज्ञः परमात्मा एकएव। जीवस्तु प्रतिशरीरं भिन्नः॥

सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तंपरमाणुरूपं नित्यं च॥

आधेयतायाः निरूपकतासंबन्धेनाधिकरणतायामन्वयः। तथाच ज्ञाननिष्ठाधेयतानिरूपकाधिकरणतावानात्मेति बोधः। तादृशाधिकरणतावत्त्वं आत्मनो लक्षणं। स द्विविध इति। द्वे विधे यस्य सः द्विविधः। यच्छब्दस्य आत्मार्थः। पष्ठ्याः आधेयतार्थः। आधेयतायां आत्मनः निरूपितत्वसंबन्धेनान्वयः। आधेयतायाः आश्रयतासंबन्धेन विधाशब्दार्थविभाजकधर्मे अन्वयः। विभाजकधर्मे द्विशब्दार्थभूतद्वित्वसंख्याविशिष्टस्य अभेदसंबन्धेनान्वयः। तथाच आत्मनिरूपिताधेयताश्रयविभाजकधर्मौ द्वित्वसंख्याविशिष्टाभिन्नौ इति विग्रहार्थः। समासार्थस्तु द्वित्वसंख्याविशिष्टाभिन्नविभाजकधर्मनिष्ठाधेयतानिरूपकआत्मा इति।

परमात्मा जीवात्माचेतीति। परमात्मशब्दस्य परमात्वमर्थः। जीवात्मशब्दस्य जीवात्मत्वमर्थः। इतिशब्दस्याभेदोर्थः। परमात्मत्वजीवात्मत्वयोः प्रतियोगितासंबन्धेनाभेदन्वयः। अभेदस्य आश्रयतासंबन्धेन द्विविधशब्दार्थघटकविभाजकधर्मेन्वयः। चशब्दस्य परमात्मत्वसमुच्चयोर्थः। तस्याश्रयतासंबन्धेन जीवात्मत्वेन्वयः। तथाच परमात्वप्रतियोगिकपरमात्मत्वसमुच्चयविशिष्टजीवात्मत्वप्रतियोगिकाभेदाश्रय द्वित्वसंख्याविशिष्टविभाजकधर्मनिष्ठाधेयतानिरूपकः आत्मा इति समुदायार्थः।

तत्रेतितच्छब्दस्य परमात्मजीवात्मसमुदायोर्थः। त्रल्प्रत्ययस्य घटकतार्थः। घटकतायां समुदायस्य निरूपितत्वसंबन्धेनान्वयः। घट-

कतायाः आश्रयतासंबन्धेन परमात्मनि अन्वयः। तथाच परमात्म जीवात्म समुदायनिरूपितघटकताश्रयः परमात्मा ईश्वरः सर्वज्ञः एक एवेत्यन्वयः। ईश्वरः ईशनशीलः। ईशनं प्रवृत्तिनिवृत्त्यनुकूलव्यापारः। सर्वं जानातीति सर्वज्ञः। द्वितीयायाः विषयतार्थः। विषयतायां सर्वस्य आधेयतासंबन्धेनान्वयः। विषयतायाः जानातीत्यत्र ज्ञाधात्वर्थज्ञाने निरूपकतासंबन्धेनान्वयः। आख्यातार्थः आश्रयः। तथाच सर्वनिष्ठविषयतानिरूपकज्ञानाश्रयः परमात्मा इति बोधः।

प्रतिशरीरं भिन्नइति। प्रतिपदसमभिव्याहृतशरीरशब्दस्य शरीरत्वव्यापकत्वमर्थः। तस्याश्रयतासंबन्धेन भिन्नशब्दार्थघटकभेदेन्वयः। तथाच शरीरत्वव्यापकभेदाश्रयः जीवः इति बोधः॥

मनोनिरूपयतीति। नीरित्युपसर्गपूर्वकरूपधातोः निरूपणमर्थः। मनइति द्वितीयार्थविशेष्यतायाः निरूपणशब्दार्थैकदेशज्ञाने निरूपकतासंबन्धेनान्वयः। आख्यातस्याश्रयोर्थः। तथाच मनोनिष्ठविशेष्यतानिरूपकलक्षणस्वरूपप्रामाण्याद्यन्यतमप्रकारकज्ञानजनकशब्दानुकूलकृत्याश्रयः इतिबोधः॥

सुखादीति। सुखादीनां उपलब्धिः सुखाद्युपलब्धिः। षष्ठ्याः विषयतार्थः। विषयतायां सुखादेः आधेयतासंबन्धेनान्वयः। उपलब्धिशब्दस्य साक्षात्कारार्थः। साक्षात्कारे विषयतायाः निरूपकता संबन्धेनान्वयः। उपलब्धेः साधनं। षष्ठ्याः जन्यतार्थः। जन्यतायां उपलब्धिशब्दार्थस्याधेयतासंबन्धेनान्वयः। साधनपदस्य जनकतावदर्थः। एकदेशजनकतायां जन्यतायाः निरूपितत्वसंबन्धेनान्वयः। तथाच सुखादिनिष्ठविषयतानिरूपकसाक्षात्कारनिष्ठजन्यतानिरूपितजनकतावत् मनइति शाब्दबोधः। अनन्तं एकत्वान्यसंख्यापर्याप्त्यनधिकरणं। तत्र हेतुः प्रत्यात्मनियतत्वादिति। आत्मनि आत्मनि प्रत्यात्म। प्रत्यात्मनियतं प्रत्यात्मनियतं। तस्य भावः नियतत्वं। तस्मात् नियतत्वात्। शाब्दबोधस्तु इत्थं प्रति-

पदसमभिव्याहृतात्मपदस्य आत्मत्वव्यापकत्वमर्थः। तस्य आश्रयतासंबन्धेन नियतत्वेन्वयः। नियतत्वं वृत्तिमत्त्वं। तथाच आत्मत्वव्यापकवृत्तिमत्त्वादिति। परमाणु रूपं यस्य तत् परमाणुरूपं। यच्छब्दार्थः मनः। षष्ठ्यर्थः अभेदः। अभेदे मनसः अनुयोगितासंबन्धेनान्वयः। अभेदस्य प्रतियोगितासंबन्धेन स्वरूपेन्वयः। स्वरूपे च परमाणुपदार्थस्य अभेदसंबन्धेनान्वयः। तथाच मनोनुयोगिकाभेदप्रतियोगिस्वरूपं परमाण्वभिन्नं इति विग्रहार्थः। समासार्थस्तु परमाण्वभिन्न स्वरूपप्रतियोगिकाभेदानुयोगि मनइति। परमाणुशब्दार्थस्तु अपकर्षानाश्रयाणुत्वविशिष्ट। परमपदार्थस्य अपकर्षानाश्रयत्वस्य अणुत्वविशिष्टे अन्वये अणुत्वेपि अर्थात्परमत्वस्य लाभात्। अणुषु मनोपेक्षया अणुपदार्थस्याभावेन मनोनिष्ठाणुत्वस्य उत्कृष्टत्वेन अपकर्षानाश्रयत्वात्परमत्वोक्तिर्नानुपपन्ना। नित्यं ध्वंसाप्रतियोगि इति द्रव्यनिरूपणं॥

अथ गुणनिरूपणं। चक्षुर्मात्रेति। चक्षुर्मात्रेण ग्राह्यः चक्षुर्मात्रग्राह्यः। तृतीयार्थः जन्यता। जन्यतायां चक्षुर्मात्रस्य निरूपितत्वसंबन्धेनान्वयः। ग्रहधातोः ज्ञानमर्थः। ज्ञाने जन्यतायाः आश्रयतासंबन्धेनान्वयः। ण्यत्प्रत्ययस्य विषयतावानर्थः। विषयतायां ज्ञानस्य निरूपितत्वसंबन्धेनान्वयः। तथाच चक्षुर्मात्रनिरूपितजन्यताश्रयज्ञाननिरूपितविषयताश्रयो गुणः रूपं इति शाब्दबोधः। रूपज्ञानं हि चक्षुर्मात्रेण जन्यते। जन्यं ज्ञानं। जन्यता ज्ञाननिष्ठा। जन्यताश्रयः ज्ञानं। जन्यताच चक्षुर्मात्रेण निरूपिता। तादृशज्ञाने रूपं विषयः। विषयता रूपनिष्ठा। विषयताश्रयः रूपं। विषयताच ज्ञानेन निरूपिता। तथाच चक्षुर्मात्रनिरूपितजन्यताश्रयज्ञाननिरूपितविषयतावद्रूपमिति न वाक्यार्थानुपपत्तिः। चक्षुर्मात्रजन्यज्ञानविषयत्वे सति गुणत्वं रूपस्य लक्षणं। मात्रपदस्य चक्षुर्भिन्नेन्द्रियजन्यज्ञानाविषयत्वमर्थः। विशेषणानां प्रयोजनं न्यायबोधिन्यां

स्पष्टं। अत्रेदं विचार्यते । नन्वत्र किं मात्रपदेन चक्षुर्भिन्नत्वगिन्द्रियं विवक्षितं उतचक्षुर्भिन्नं सर्वेन्द्रियमपि। नाद्यः। सर्पश्रुतशब्देतिव्याप्तेः। तस्यशब्दस्य त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वात् सर्पसंबन्धिचक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वाच्च । सर्पस्य श्रोत्रेन्द्रियाभावात् चक्षुरिन्द्रियस्यैव शब्दग्रहणसामर्थ्यात् । नच सर्पस्य श्रोत्रेन्द्रियमपि वर्ततइति वाच्यं । चक्षुःश्रवा इति कोशे चक्षुषी एव श्रवसी यस्य इति बहुव्रीहिणा सर्पस्य श्रोत्रेन्द्रियनिषेधावगमात् । ननु चक्षुषि श्रवः यस्य सः इति व्यधिकरणबहुव्रीह्यंगीकारेण चक्षुरधिकरणे श्रोत्रेन्द्रियवानित्यर्थलाभात् सर्पस्य श्रोत्रेन्द्रियांगीकारेपि न कोशविरोधइति चेत् न। एकस्यैव चक्षुरिन्द्रियस्य शब्दग्रहणसामर्थ्यांगीकारेण निर्वाहे अतिरिक्तश्रोत्रेन्द्रियकल्पनायाःअन्याय्यत्वात् । नच शब्दग्रहणान्यथानुपपत्त्या श्रोत्रेन्द्रियमवश्यमंगीकार्यं । अन्यथा चक्षुषः अन्यत्रादृष्टस्य शब्दग्रहणसामर्थ्यस्यांगीकारे अदृष्टकल्पनाप्रसंगादिति वाच्यं । धर्मिकल्पनातो वरं धर्मकल्पनं इति न्यायात् लाघवानुरोधेन चक्षुषएव तादृशसामर्थ्यकल्पनात् । अन्यथा मार्जारादीनां रात्रौ नवनीतादिग्रहणात् चक्षुषः आलोकासमवधानकाले रूपग्राहकत्वस्य क्वाप्यदर्शनात् आलोकासमवधानकाले रूपग्रहणान्यथानुपपत्त्या इन्द्रियान्तरस्वीकारापत्तेः । तस्मात् सर्पस्य श्रोत्रेन्द्रियाभावात् शब्देतिव्याप्तिर्दुर्वारा । नच मार्जारादीनां इन्द्रियान्तरस्वीकारे तस्य अधिष्ठानं वाच्यं । न तावत् चक्षुरिन्द्रियाधिकरणमेव । एकस्मिन् गोलके इन्द्रियद्वयसमावेशायोगात् । नाप्यधिष्ठानान्तरं अनुपलंभात् । यदि च एकस्मिन्नेवाधिकरणे इन्द्रियद्वयं स्वीक्रियते । तदा सर्पस्यापि इन्द्रियद्वयं स्वीक्रियतां । अतः मार्जारादीनां इन्द्रियान्तरस्वीकारापत्त्यसंभवइति वाच्यं । मार्जारादीनां आलोकासमवधानतदभावकाले रूपग्रहणान्यथानुपपत्त्या तद्योग्येन्द्रियान्तरस्वीकारापत्तिसंभवात् । नचैवमपि कौशिकादीनामालोकासमवधानकालएव रूपादिग्रहण

सत्त्वेनास्मदादीनामिव चक्षुरिन्द्रियस्य मार्जारादीनामिव इन्द्रियान्तरस्यवा स्वीकारासंभवेन एतदुभयविलक्षणेन्द्रियस्वीकारापत्तिरिति वाच्यं। इष्टत्वात्। न द्वितीयः। चक्षुर्भिन्नेन्द्रियेण मनसा रूपस्य ग्रहणात् असंभवापत्तेः। अत्रेदं समाधानमाकलयामः। चक्षुर्मात्रग्राह्यइत्यनेन चक्षुर्भिन्नेन्द्रियेण संबद्धस्सन् अग्राह्यः चक्षुरिन्द्रियेण संबद्धस्सन् ग्राह्यो यो गुणः तद्रूपमिति विवक्षणान्नकोपि दोषः। शब्दोहि चक्षुर्भिन्नेन्द्रियेण श्रोत्रेण समवायरूपसन्निकर्षेण संबद्धस्सन् गृह्यते। अतः न तत्रातिव्याप्तिः। रूपं हि चक्षुर्भिन्नेन्द्रियेण न केनापि संबद्धं सत् गृह्यते। अतो नासंभवः। अस्यचायं परिष्कारः चक्षुर्भिन्नेन्द्रियसन्निकर्षविशिष्टविषयत्वाभावः मात्रपदस्यार्थः। विषयतायां सन्निकर्षवैशिष्ट्यंच स्वप्रयोज्यत्व स्वसामानाधिकरण्योभयसंबन्धेन। चक्षुर्भिन्नेन्द्रियेण त्वगिन्द्रियेण घटपटादि प्रत्यक्षजनने संयोगः सन्निकर्षः। घटपटादिप्रत्यक्षंप्रति संयोगः कारणं। कार्यं घटपटादिप्रत्यक्षं। तच्च विषयतासंबन्धेन घटे उत्पद्यते। कार्यता घटप्रत्यक्षनिष्ठा। कार्यतायां विषयतासंबन्धोवच्छेदकः। कार्यतावच्छेदकसंबन्धः विषयतासंबन्धः। विषयतासंबन्धश्च सन्निकर्षप्रयोज्यः। कार्यतावच्छेदकत्वात्। तथाहि। त्वगिन्द्रियेण घटस्य संयोगे सति घटस्य प्रत्यक्षविषयत्वं भवति। यस्मिन् सति यद्भवति तंप्रति तत्प्रयोजकं। यथा क्षुन्निवृत्तिं प्रति भोजनं प्रयोजकं। प्रकृते घटे यस्मिन्सति त्वक्संयोगेसति यद्भवति प्रत्यक्ष विषयत्वं भवति। तंप्रति प्रत्यक्षविषयत्वंप्रति तत् त्वक्संयोगः प्रयोजकः। एवंसति घटे प्रत्यक्षविषयता वर्तते। त्वक्संयोगोपि वर्तते। प्रत्यक्षविषयता त्वक्संयोगप्रयोज्या। त्वक्संयोगाधिकरणे घटे प्रत्यक्षविषयता वर्तते। स्वाधिकरणवृत्तित्वस्वप्रयोज्यत्वोभय संबन्धेन त्वक्संयोगविशिष्टप्रत्यक्षविषयता। स्वपदेन त्वक्संयोगोपादाने स्वाधिकरणं घटः। तद्वृत्तिः प्रत्यक्षविषयता। वृत्तित्वं

प्रत्यक्षविषयतायाः। स्वप्रयोज्यत्वंच प्रत्यक्षविषयतायां। अतः उक्तोभयसंबन्धेन चक्षुर्भिन्नेन्द्रियसन्निकर्षविशिष्टा या प्रत्यक्षविषयता घटानिष्ठा प्रत्यक्षविषयता। तदभावः रूपे वर्तते इति लक्ष्ये लक्षणसमन्वयः। चक्षुर्भिन्नेन्द्रियपदेन मनइन्द्रियमादाय नासंभवः। चक्षुर्भिन्नेन्द्रियं मनइन्द्रियं। तत्सन्निकर्षः मनस्संयोगः। तद्विशिष्टा या प्रत्यक्षविषयता आत्मनिष्ठमानसप्रत्यक्षविषयता। आत्मनः मनसा संयोगे आत्मप्रत्यक्षं भवति। प्रत्यक्षे आत्मा विषयः। प्रत्यक्षविषयता आत्मनिष्ठा। साच मनस्संयोगप्रयोज्या। यस्मिन्सति यद्भवति तंप्रति तस्य प्रयोजकत्वात्। प्रकृते यस्मिन्सति आत्मनि मनस्संयोगेसति यद्भवति प्रत्यक्षविषयता भवति। तंप्रति प्रत्यक्षविषयतांप्रति तत् प्रयोजकं मनस्संयोगः प्रयोजकः। एवंच आत्मनिष्ठा प्रत्यक्षविषयता मनस्संयोगप्रयोज्या भवति। एवंच मनस्संयोगाधिकरणे आत्मनि प्रत्यक्षविषयता वर्तते। तथाच स्वाधिकरणवृत्तित्व स्वप्रयोज्यत्वोभयसंबन्धेन चक्षुर्भिन्नेन्द्रियमनस्सन्निकर्षविशिष्टा प्रत्यक्षविषयता आत्मनिष्ठप्रत्यक्षविषयता। तदभावः रूपेऽस्तीति नासंभवः। शब्दे नातिव्याप्तिः। चक्षुर्भिन्नेन्द्रियं श्रोत्रेन्द्रियं। तत्सन्निकर्षः समवायः। तद्विशिष्टा या प्रत्यक्षविषयता शब्दनिष्ठप्रत्यक्षविषयता। कथमित्युक्तौ स्वं श्रोत्रसमवायः। स्वाधिकरणं शब्दः तद्वृत्तिः प्रत्यक्षविषयता। तद्वृत्तित्वं प्रत्यक्षविषयतायाः। एवं स्वप्रयोज्यत्वमपि वर्तते। यस्मिन्सति यद्भवति तं प्रति तस्य प्रयोजकत्वात्। यस्मिन्सति शब्दे श्रोत्रसमवाये सति यद्भवति प्रत्यक्षविषयता भवति। तंप्रति प्रत्यक्षविषयतां प्रति तत् श्रोत्रसमवायः प्रयोजकः। तथाच चक्षुर्भिन्नेन्द्रियश्रोत्रसन्निकर्षविशिष्टा या प्रत्यक्षविषयता शब्दनिष्ठप्रत्यक्षविषयता। तदभावः शब्दे नास्तीति नातिव्याप्तिः। चक्षुर्भिन्नेन्द्रियपदेन त्वगिन्द्रियमात्रं विवक्षितवतो न्यायबोधिनीकारस्यायमेवाभिप्रायः। तथाच चक्षुर्भि-

श्रेन्द्रियेत्यत्र इन्द्रियपदेन शब्दाग्राहकचक्षुरिन्द्रियं विवक्षणीयं। सर्पचक्षुषः शब्दग्राहकत्वेन तद्व्यावृत्तिः। यद्वा सर्पस्य श्रोत्रेन्द्रियमपि वर्तते इत्यंगीकार्यं। अन्यथा शब्दग्रहणस्यैवानुपपत्तेः। नच चक्षुरिन्द्रियस्यैव शब्दग्रहणसामर्थ्यांगीकारात् न शब्दग्रहणानुपपत्तिरिति वाच्यं। चक्षुरिन्द्रियेण शब्दग्रहणस्यासंभवात्। तथाहि। शब्दः किं चक्षुरिन्द्रियेण सन्निकृष्टस्सन् गृह्यते उत असन्निकृष्टस्सन्। नाद्यः। इन्द्रियेण शब्दस्य सन्निकर्षे प्रत्यक्षायोगात्। आद्येपि किं चक्षुः शब्ददेशं गत्वा शब्देन संयुज्यते उत शब्दः चक्षुर्देशमागत्य चक्षुषा संयुज्यते। नाद्यः। दूरस्थशब्दस्यापि प्रत्यक्षप्रसंगात्। चक्षुषो दूरस्थशब्ददेशपर्यन्तं गमनासंभवात्। न द्वितीयः। चक्षुषः शब्देन सन्निकर्षासंभवात्। सच संबन्धः संयोगोवा समवायोवा वाच्यः। नोभयमपि संभवति। शब्दस्य गुणत्वेन चक्षुषो द्रव्यत्वेन उभयोः संयोगासंभवात्। शब्दस्य आकाशगुणत्वेन चक्षुषा समवायासंभवात्। तस्मात् चक्षुर्गोळकावच्छिन्नाकाशं श्रोत्रेन्द्रियं। तेन च शब्दग्रहणमिति न शब्दे अतिव्याप्तिः। शब्दस्य चक्षुरिन्द्रियजन्यज्ञानविषयत्वाभावात्। अतः मात्रपदेन त्वगिन्द्रियाग्राह्यत्वविवक्षणं न्यायबोधिनीकृतो युक्तमेवेति। परंतु मात्रपदेन चक्षुर्भिन्नेन्द्रियजन्यज्ञानाविषयत्वस्यैव लाभात् विशिष्य त्वगिन्द्रियजन्यज्ञानाविषयत्वस्यालाभात् तत्पक्षमपहायान्यमेवाश्रितवन्तः। नच वाच्यं अस्मिन्गृहे चैत्रमैत्रौ उभौ किं वर्तेते इति प्रश्ने चैत्रमात्रो वर्तते इत्युत्तरं प्रयुज्यते। तत्र चैत्रान्यस्य सर्वस्य निषेधो नमात्रपदेन बोधयितुंशक्यः। चैत्रान्यदेवदत्तस्य तस्मिन्गृहे वर्तमानतादशायामपि चैत्रएवास्तीत्युत्तरस्य दृष्टत्वात्। अतः चैत्रान्यमैत्रस्यैव निषेध्यतया तद्वन्मात्रपदेन चक्षुर्भिन्नत्वगिन्द्रियजन्यज्ञानविषयत्वं निषेद्धुं शक्यतएवेति।' सर्वपदस्य स्वरसतः सकलवस्तुबोधकत्वेपि चैत्रआगतः मैत्रआगतः विष्णुमित्रआगतः सर्वे आगताः इत्यत्र प्रक्रान्तयावद्वस्तुबोधकत्वस्य

# रसनग्राह्यो गुणो रसः ॥
# घ्राणग्राह्यो गुणो गन्धः ॥
# त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः ॥

व अस्मिन्गृहे चैत्रो मैत्रश्च किं वर्तते इति प्रश्नस्थले उत्तरवाक्यघटकैवकारस्य पूर्वप्रसक्तमैत्रनिषेधकत्वसंभवेपि प्रकृते रूपं किं चक्षुषा त्वगिन्द्रियेणच गृह्यते इति प्रश्नाभावात् मात्रपदेन त्वगिन्द्रियग्राह्यत्वस्य विशिष्य निषेद्धुमशक्यत्वात् न्यायबोधिनीकारोक्तमात्रपदार्थस्य यथाश्रुतमूलार्थत्वासंभवात् ॥

रसनेन्द्रियनिरूपितजन्यताश्रयज्ञाननिरूपितविषयतावान्गुणः रसः। रसनेन्द्रियजन्यं यज्ज्ञानं अयं रसइति ज्ञानं। जन्यता ज्ञाननिष्ठा। जन्यताश्रयः ज्ञानं। जन्यताच रसनेन्द्रियेण निरूपिता। रसनेन्द्रियस्य जनकत्वात्। जन्यतायाः जनकतानिरूपितत्वात्। तादृशज्ञाने रसो विषयः। विषयता रसनिष्ठा। विषयताश्रयः रसः। विषयताच ज्ञानेन निरूपिता भवति। तथाच रसनेन्द्रियनिरूपितजन्यताश्रयज्ञाननिरूपितविषयतावान्रसो भवति। इति शाब्दबोधोपपादनं। रसनेन्द्रियजन्यज्ञानविषयत्वेसति गुणत्वं रसस्य लक्षणं। गुणत्वानुपादाने रसत्वजातौ अतिव्याप्तिः ॥

घ्राणेन्द्रियनिरूपितजन्यताश्रयज्ञाननिरूपितविषयतावान् गुणो गन्धः ॥

त्वगिन्द्रियमात्रेति। त्वगिन्द्रियमात्रनिरूपितजन्यताश्रयज्ञाननिरूपितविषयतावान् गुणः स्पर्शः। चक्षुरिन्द्रियजन्यज्ञानाविषयत्वे सति त्वगिन्द्रियजन्यज्ञानविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणं। अत्र विशेषणप्रयोजनं न्यायबोधिन्यां वर्तते। परमाणुस्पर्शस्य अतीन्द्रियत्वेन केनापीन्द्रियेणाग्राह्यतया त्वगिन्द्रियजन्यज्ञाने अविषयत्वादव्याप्तिः। अतः चक्षुरिन्द्रियजन्यज्ञानाविषय त्वगिन्द्रियजन्य

एकादिव्यवहारहेतुः संख्या ॥
आद्यपतनासमवायिकारणं गुरुत्वं ॥

ज्ञानविषयजातिमत्त्वे सति गुणत्वं स्पर्शस्य लक्षणमिति जातिघटित परिष्कारः कार्यः। उक्तपरिष्कारे परमाणुस्पर्शे अव्याप्तिर्नभवति। परमाणुस्पर्शनिष्ठस्पर्शत्वजातिः घटस्पर्शनिष्ठस्पर्शत्वजातिरपि एकैव घटस्पर्शस्य त्वगिन्द्रियेण प्रत्यक्षे जाते यो गुणो यदिन्द्रियेण ग्राह्यः तन्निष्ठा जातिरपि तदिन्द्रियग्राह्या इति न्यायेन घटस्पर्शनिष्ठस्पर्शत्व जातेः त्वगिन्द्रियेण ग्रहणे परमाणुस्पर्शनिष्ठस्पर्शत्वजातिरपि गृहीता भवति। उभयोरेकत्वात्। तथाच त्वगिन्द्रियग्राह्या चक्षुरिन्द्रियाग्राह्या या जातिः स्पर्शत्वरूपा जातिः। तादृशजातिमत्त्वस्य परमाणुस्पर्शेपि सत्त्वात् लक्षणसंगतिः। अस्मिंल्लक्षणे गुणपदानुपादाने वायावतिव्याप्तिः। प्राचीनमते वायोः त्वगिन्द्रियजन्यप्रत्यक्ष विषयत्वेन वायुत्वजातेरपि त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वात् चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वाच्च। तथाच चक्षुरिन्द्रियाग्राह्या त्वगिन्द्रियग्राह्या या जातिः वायुत्वरूपा जातिः। तादृशजातिमत्त्वस्य वायोः सत्त्वादतिव्याप्तिः। अतो गुणपदं ॥

एकादिनिष्ठविषयतानिरूपकव्यवहारनिष्ठजन्यतानिरूपित जनकतावती संख्या ॥

आद्यपतनासमवायिकारणं गुरुत्वं। असमवायिकारणपदस्य समवायसंबन्धावच्छिन्नकार्यतानिरूपित समवायसंबन्धावच्छिन्न कारणतावानर्थः। आद्यपतनासमवायिकारणेति समुदायस्य आद्यपतननिष्ठसमवायसंबन्धावच्छिन्नकार्यतानिरूपित समवायसंबन्धावच्छिन्नकारणतावत् गुरुत्वमित्यर्थः। गुरुत्वं समवायसंबन्धेन ताल फले विद्यमानं सत् समवायसंबन्धेन आद्यपतनं जनयति। जन्यं आद्यपतनं। जन्यता आद्यपतननिष्ठा। जन्यतायां समवायसंबन्धो

आद्यस्यन्दनासमवायिकारणं द्रवत्वं ॥
चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः ॥

ऽवच्छेदकः । समवायसंबन्धावच्छिन्ना जन्यता । जनकं आद्यपतनं । जनकतायां समवायसंबन्धोऽवच्छेदकः । समवायसंबन्धावच्छिन्ना जनकता । अत्र जन्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशे उपरिचरवसोरदृष्टेऽतिव्याप्तिः । तादृशादृष्टमपरिचरवसौ समवायसंबन्धेन विद्यमानं सत् स्वजन्यभोगाश्रयत्वसंबन्धेन पतनं जनयति । जन्यं पतनं । जन्यतायां स्वजन्यभोगाश्रयत्वसंबन्धोऽवच्छेदकः । स्वं पतनं । स्वजन्यभोगः अहं दुःखीति दुःखानुभवः । तदाश्रयः उपरिचरवसुः । अतः तत्रातिव्याप्तिवारणाय समवायसंबन्धावच्छिन्नत्वं निवेशनीयं । निवेशे नातिव्याप्तिः । उपरिचरवसुपतननिष्ठजन्यतायाः स्वजन्यभोगाश्रयत्वसंबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावात् ॥

आद्यस्यन्दननिष्ठसमवायसंबन्धावच्छिन्नकार्यतानिरूपित समवायसंबन्धावच्छिन्नकारणताश्रयत्वं द्रवत्वस्य लक्षणं । भगीरथादृष्टे अतिव्याप्तिवारणाय आद्यस्यन्दननिष्ठजन्यतायां समवायसंबन्धावच्छिन्नत्वं निवेशनीयं ॥

चूर्णादीनां पिण्डीभावः चूर्णादिपिण्डीभावः । षष्ठ्याः आधेयतार्थः । आधेयतायां चूर्णादेः निरूपितत्वसंबन्धेनान्वयः । तथाच चूर्णादिनिरूपिता आधेयता । आधेयतायाः पिण्डीभावे आश्रयतासंबन्धेनान्वयः । तथाच चूर्णादिनिरूपिताधेयताश्रयः पिण्डीभावः । पिण्डीभावस्य हेतुः पिण्डीभावहेतुः । षष्ठ्याः जन्यतार्थः । जन्यतायां पिण्डीभावस्याधेयतासंबन्धेनान्वयः । तथाच चूर्णादिनिरूपिताधेयताश्रयपिण्डीभावनिष्ठजन्यता । हेतुशब्दस्य जनकतावानर्थः । जनकतायां जन्यतायाः निरूपितत्वसंबन्धेनान्वयः ।

श्रोत्रग्राह्यो गुणः शब्दः॥ स द्विविधः ध्वन्यात्मको वर्णात्मकश्चेति ॥

सर्वव्यवहारहेतुर्ज्ञानं बुद्धिः॥ साद्विविधा स्मृति-रनुभवश्चेति ॥

संस्कारमात्रजन्यं ज्ञानं स्मृतिः ॥

---

तथाच चूर्णादिनिरूपिताधेयताश्रयपिण्डीभावनिष्ठजन्यतानिरूपित जनकतावान् स्नेहः ॥

श्रोत्रजन्यज्ञानविषयत्वे सति गुणत्वं शब्दस्य लक्षणं। ध्वनिः आत्मा स्वरूपं यस्य सः ध्वन्यात्मकः। वर्णः आत्मा स्वरूपं यस्य सः वर्णात्मकः ॥

सर्वेचते व्यवहाराश्च सर्वव्यवहाराः। सर्वव्यवहाराणां हेतुः सर्वव्यवहारहेतुः। षष्ठ्याः जन्यतार्थः। जन्यतायां सर्वव्यवहार-स्य आधेयतासंबन्धेनान्वयः। तथाच सर्वव्यवहारनिष्ठजन्यता। हेतुशब्दस्य जनकतावानर्थः। जनकतायां जन्यतायाः निरूपितत्व संबन्धेनान्वयः। सर्वव्यवहारकारणत्वं बुद्धेर्लक्षणं।

केवलं संस्कारः संस्कारमात्रं। संस्कारमात्रात् जन्यं संस्कार मात्रजन्यं। पञ्चम्याः जनकतार्थः। जनकतायां संस्कारमात्रस्य आधेयतासंबन्धेनान्वयः। संस्कारमात्रनिष्ठजनकता। जन्यपदस्य जन्यतावानर्थः। जन्यतायां जनकतायाः निरूपितत्वसंबन्धेनान्वयः। तथाच संस्कारमात्रनिष्ठजनकतानिरूपितजन्यतावज्ज्ञानं। संस्कार मात्रजन्यत्वे सति ज्ञानत्वं स्मृतेर्लक्षणं। स्मृतिलक्षणेपि मात्रपदेन संस्कारेतराजन्यत्वस्यैव विवक्षणं। मनइन्द्रियमादायासंभवस्तु संस्का-रेतराजन्यत्वस्थाने संस्कारेतरविशिष्टान्यत्वं निवेश्य वारणीयः। वैशिष्ट्यं च स्वप्रयोज्यत्वस्वाधिकरणवृत्तित्वोभयसंबन्धेन। एवंच न कोपि दोषः। मात्रपदेन बहिरिन्द्रियाजन्यत्वविवक्षणे सोऽहं सुखी

तद्भिन्नं ज्ञानमनुभवः । स द्विविधः । यथार्थोऽयथार्थश्चेति ॥

तद्वति तत्प्रकारकानुभवो यथार्थः ॥

तिप्रत्यभिज्ञायामतिव्याप्तिः । तस्याः प्रत्यभिज्ञायाः संस्कारजन्यत्वात् बहिरिन्द्रियाजन्यत्वाच्च । अतः उक्तविवक्षणमावश्यकं ॥

तस्याः भिन्नं तद्भिन्नं स्मृतिभिन्नं । पञ्चम्याः प्रतियोगितार्थः । तच्छब्दस्य स्मृतिरर्थः । प्रतियोगितायां स्मृतेः आधेयतासंबन्धेनान्वयः । तथाच स्मृतिनिष्ठप्रतियोगिता । भिन्नशब्दस्य भेदवदर्थः । भेदे प्रतियोगितायाः निरूपकतासंबन्धेनान्वयः । तथाच स्मृतिनिष्ठप्रतियोगितानिरूपकभेदवत् ज्ञानं । तद्भिन्नं ज्ञानमनुभवः इत्यत्र तद्भिन्नमित्यस्य स्मृतिभिन्नत्वमित्यर्थइति न्यायबोधिनीकारः । अत्रेदं बोध्यं । एवंसति अन्योन्याश्रयः । स्मृतिभिन्नत्वघटितलक्षणज्ञानं प्रति स्मृतिभिन्नत्वज्ञानं कारणं । घटितज्ञाने घटकज्ञानस्य कारणत्वात् । स्मृतिभिन्नत्वज्ञानं प्रति लक्षणज्ञानं कारणं । इतरभेदज्ञानस्य लक्षणज्ञानाधीनत्वात् । अतस्तद्भिन्नमित्यस्य स्मृतिभिन्नमिति नार्थः । किंतु संस्कारमात्रजन्यभिन्नमित्यर्थः ॥

सः अस्मिन् अस्तीति तद्वान् । तस्मिन् तद्वति । सप्तम्याः विशेष्यतार्थः । विशेष्यतायां तद्वतः आधेयतासंबन्धेनान्वयः । तथाच तद्वन्निष्ठविशेष्यता । विशेष्यतायाः अनुभवे निरूपकतासंबन्धेनान्वयः । तथाच तद्वन्निष्ठविशेष्यतानिरूपकः । अनुभवः । तत्प्रकारकः सः प्रकारः यस्मिन् सः तत्प्रकारकः । यच्छब्दस्यानुभवोर्थः । सप्तम्याः निरूपितत्वमर्थः । प्रकारशब्दस्य प्रकारतावानर्थः । निरूपितत्वस्य प्रकारतायामन्वयः । तथाच अनुभवनिरूपितप्रकारतावान् सइति विग्रहार्थः । समासार्थस्तु तन्निष्ठप्रकारतानिरूपकः अनुभवइति । तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति

# तद्भाववति तत्प्रकारकोऽयथार्थः ॥

अनुभवत्वं यथार्थानुभवस्य लक्षणं । नन्वेवं सति घटे घटत्वमिति प्रमायां घटः प्रकारः घटत्वं विशेष्यं । यत्सप्तम्यन्तं तत् ज्ञाने प्रकारः । प्रथमान्तं विशेष्यं । तच्छब्देन प्रकारो ग्राह्यः । तथाच सः घटः तद्वत् घटत्वमिति वक्तव्यं ! तच्च न संभवति । घटत्वे घटस्यासत्त्वात् । अतः अव्याप्तिः इतिचेदुच्यते । तद्वतीत्यत्र तत्संबन्धवतीति विवक्षणीयं । तथाच तत्संबन्धिनिष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वं यथार्थानभवस्य लक्षणं । एवंसति घटे घटत्व मिति प्रमायां नाव्याप्तिः । घटत्वे घटस्यासत्त्वेपि घटसंबन्धो वर्तते । घट आधारः । घटत्वमाधेयं । तथाच घटघटत्वयोः आधाराधेय भावरूपः संबन्धः । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूप कानुभवत्वं यथार्थानुभवस्य लक्षणं । रजते इदं रजतमित्यनुभवे तच्छब्देन रजतत्वोपादाने तद्वत् रजतं । तद्वन्निष्ठा या विशेष्यता रजतनिष्ठा विशेष्यता । विशेष्यतानिरूपिता या तन्निष्ठा प्रकारता रजतनिष्ठा प्रकारता । प्रकारतानिरूपकत्वस्य तादृशानुभवे सत्त्वात् । अत्र तच्छब्देन रजतत्वोपादाने अयंघटः इत्यनुभवे अव्याप्तिः । तच्छब्देन घटत्वोपादाने इदं रजतमित्यनभवे अव्याप्तिः । तच्छब्दस्य तत्तद्व्यक्तिवाचकत्वेन एकदा घटत्वरजतत्वादीनां तच्छब्देन ग्रहीतुमशक्यत्वात् । अतः प्रकारताविशिष्टविशेष्यतानिरूपकत्वं यथार्थानुभवस्य लक्षणं इति परिष्कर्तव्यं । प्रकारतावैशिष्ट्यं च स्व निरूपितत्व स्वाश्रयवन्निष्ठत्वोभयसंबन्धेन । स्वपदेन रजतत्वनिष्ठ प्रकारताया उपादाने स्वनिरूपितत्वं रजतनिष्ठविशेष्यतायां । एवं स्वाश्रयः रजतत्वं । स्वाश्रयवत् रजतं । तन्निष्ठत्वं विशेष्यतायां । एवंच उक्तोभयसंबन्धेन प्रकारताविशिष्टविशेष्यता रजतनिष्ठविशेष्यता । विशेष्यतानिरूपकत्वं अनुभवस्येति लक्षणसमन्वयः ॥

तस्य अभावः तदभावः । तदभावः अस्मिन्नस्तीति तद्भाववान् । तस्मिन् तद्भाववति । षष्ठ्याः प्रतियोगित्वमर्थः । प्रति-

योगितायां तच्छब्दार्थस्य आधेयतासंबन्धेनान्वयः। तथाच तन्निष्ठ प्रतियोगिता। प्रतियोगितायाः अभावे निरूपकत्वसंबन्धेनान्वयः। तथाच तन्निष्ठप्रतियोगितानिरूपकाभाववान्। सप्तम्याः विशेष्यतार्थः। विशेष्यतायां अभाववतः आधेयतासंबन्धेनान्वयः। तथाच तन्निष्ठप्रतियोगितानिरूपकाभाववन्निष्ठ विशेष्यता। विशेष्यतायाः निरूपकतासंबन्धेनानुभवेऽन्वयः। तथाच तन्निष्ठप्रतियोगितानिरूपकाभाववन्निष्ठविशेष्यतानिरूपकः अनुभवः। तद्भाववन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वं अयथार्थानुभवस्य लक्षणं। शुक्तौ इदं रजतमिति ज्ञानं अयथार्थानुभवः। तत्र तद्भाववन्निष्ठविशेष्यतानिरूपकत्वं वर्तते। तच्छब्देन प्रकारो ग्राह्यः। तत् रजतत्वं। तद्भावः रजतत्वाभावः। तद्भाववती शुक्तिः। साच ज्ञाने विशेष्या। विशेष्यता शुक्तिनिष्ठा। तद्भाववन्निष्ठा विशेष्यता। विशेष्यताया अनुभवो निरूपकः। तथा तन्निष्ठप्रकारतानिरूपकत्वं च वर्तते। तत् रजतत्वं। प्रकारता रजतत्वनिष्ठा। तन्निरूपकश्चानुभवः। तद्भाववन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वं अयथार्थानुभवस्य लक्षणं। एवंसति रंगरजतयोर्जायमानायां इमे रंगरजतेइति समूहालंबनप्रमायामतिव्याप्तिः। तज्ज्ञाने रंगं विशेष्यं। रंगांशे रंगत्वं प्रकारः। रजतं विशेष्यं। रजतांशे रजतत्वं प्रकारः। एवंच तत् रजतत्वं। तद्भावः रजतत्वाभावः। तद्भाववत् रंगं। तथाच तज्ज्ञानं तद्भाववन्निष्ठविशेष्यतानिरूपकं तन्निष्ठप्रकारतानिरूपकंच भवति। अतः तत्रातिव्याप्तिवारणाय तद्भाववन्निष्ठविशेष्यतानिरूपकत्वावच्छिन्नतन्निष्ठप्रकारतानिरूपकत्वं अयथार्थानुभस्य लक्षणं। इति परिष्करणीयं। एवंसति अतिव्याप्तिर्नभवति। रंगनिष्ठविशेष्यतानिरूपकत्वावच्छिन्नं रंगत्वनिष्ठप्रकारतानिरूपकत्वमेव भवति। नतु रजतनिष्ठप्रकरतानिरूपकत्वं। ययोर्विषयतयोर्निरूप्यनिरूपकभावः तन्निरूपितविषयतयोः अवच्छेद्यावच्छेदकभावः॥

## व्यापारवदसाधारणकारणं करणं ॥
## कार्यनियतपूर्ववृत्ति कारणं ॥

तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारस्य लक्षणं। तज्जन्यत्वमात्रोक्तौ घटादिरूपकार्ये अतिव्याप्तिः। अतः तज्जन्यजनकत्वमपि निवेशनीयं। तज्जन्यजनकत्वमात्रोक्तौ कुलाले अतिव्याप्तिः। कुलालस्य दण्डजन्यघटजनकत्वात्। असाधारणकारणत्वं करणस्य लक्षणमित्युक्तौ चक्रभ्रमणे अतिव्याप्तिः। चक्रभ्रमणस्य कार्यत्वातिरिक्तघटत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वात्। व्यापारवत्त्वमात्रोक्तौ काले अतिव्याप्तिः। कालस्य सर्वकार्यंप्रति कारणत्वेन चक्रभ्रमणं प्रत्यपि कारणत्वात्। अतः जनकतासंबन्धेन चक्रभ्रमणात्मकव्यापारवत्त्वस्य काले सत्त्वेनातिव्याप्तिः। तद्वारणाय असाधारणकारणत्वनिवेशः। कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं साधारणकारणस्य लक्षणं। कालः अदृष्टं ईश्वरश्च साधारणकारणं। तत्रेदं लक्षणं वर्तते। सर्वकार्यंप्रति कालः कारणं। कार्यं सर्वं। कार्यता सर्वनिष्ठा। कार्यतावच्छेदकं कार्यत्वं। कार्यत्वावच्छिन्ना कार्यता। कारणं कालः। कारणता कालनिष्ठा। कारणता च कार्यतानिरूपिता। तथाच कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं काले वर्तते इति लक्षणसमन्वयः॥

कार्यव्यापकत्वे सति कार्यपूर्ववृत्तित्वं कारणस्य लक्षणं। घटं प्रति दण्डः कारणं। तत्रेदं लक्षणं वर्तते। कार्यं घटः। कार्यव्यापकत्वं दण्डस्य भवति। कार्यव्यापकत्वं नाम कार्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वं। कार्यं घटः। कार्याधिकरणं कपालं। कार्याधिकरणवृत्तिः योऽत्यन्ताभावः पटात्यन्ताभावः। नतु दण्डात्यन्ताभावः। दण्डस्यैव तत्र सत्त्वात्। तादृशाभावस्य प्रतियोगी पटः। अप्रतियोगी दण्डः। अप्रतियोगित्वं दण्डस्य। कार्यपूर्ववृत्तित्वं

**कारणं त्रिविधं। समवाय्यसमवायिनिमित्तभेदात्। यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणं। यथा तन्तवः पटस्य। पटश्च स्वगतरूपादेः॥**

---

नाम कार्यप्रागभावाधिकरणकालवृत्तित्वं। कार्यप्रागभावः घटप्रागभावः। तदधिकरणकालः घटोत्पत्तेः पूर्वकालः। तद्वृत्तित्वं दण्डस्य। कार्यव्यापकत्वमात्रोक्तौ कार्ये घटे अतिव्याप्तिः। अतः पूर्ववृत्तित्वं। पूर्ववृत्तित्वमात्रोक्तौ रासभादावतिव्याप्तिः। अतः कार्यव्यापकत्वं देयं। कारणेन कार्ये जननीये व्यापारो वाच्यः। यथा कुठारेण छेदनरूपे कार्ये जननीये उन्नमनं व्यापारः। तथाच कार्यं छेदनं कुठारोन्नमनं व्यापारः। सकलकार्येषु विद्यमानः अकार्येषु अविद्यमानः यो धर्मः स कार्यतावच्छेदकः। घटे कार्यत्वं वर्तते घटत्वं च वर्तते। घटत्वं च कार्यत्वादन्यदेव। यथा चैत्रे पाचकत्वं ब्राह्मणत्वंच वर्तते। ब्राह्मणत्वं पाचकत्वादन्यत्॥

तन्तुः तादात्म्यसंबन्धेन स्वस्मिन् वर्तमानः सन् समवायसंबन्धेन पटं जनयति। कार्यं पटः। कार्यता पटनिष्ठा। कार्यतायां समवायसंबन्धोऽवच्छेदकः। येन संबन्धेन यत्कार्यमुत्पद्यते। तन्निष्ठकार्यतायां तत्संबन्धः अवच्छेदकः। प्रकृते येन संबन्धेन समवायसंबन्धेन। यत्पटरूपकार्यमुत्पद्यते। तन्निष्ठकार्यतायां तत्संबन्धः समवायसंबन्धः। अवच्छेदकः। तथाच समवायसंबन्धावच्छिन्ना पटनिष्ठा कार्यता। यत्संबन्धो यस्यामवच्छेदकः सा तत्संबन्धावच्छिन्नेति न्यायात् यत्संबन्धः समवायरूपसंबन्धः। यस्यां अवच्छेदकः पटनिष्ठकार्यतायामवच्छेदकः। सा पटनिष्ठकार्यता तत्संबन्धावच्छिन्ना समवायसंबन्धावच्छिन्ना। कारणं तन्तुः। कारणता तन्तुनिष्ठा। कारणतायां तादात्म्यसंबन्धः अवच्छेदकः। येन संबन्धेन यत्कारणं भवति। तन्निष्ठकारणतायां तत्संबन्धोऽवच्छेदकः। येन संबन्धेन

तादात्म्यसंबन्धेन । यत् तन्तुः कारणं । तन्निष्ठकारणतायां तन्तुनिष्ठकारणतायां । तत्संबन्धः तदात्म्यसंबन्धः अवच्छेदकः । तादात्म्यसंबन्धावच्छिन्ना कारणता । तन्तुनिष्ठकारणता पटनिष्ठकार्यतया निरूपिता भवति । कार्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशे संयोगे अतिव्याप्तिः । तादात्म्यसंबन्धेन संयोगः स्वस्मिन्वर्तमानः प्रतियोगितासंबन्धेन संयोगध्वंसं जनयति । संयोगध्वंसः कार्यं । कार्यता संयोगध्वंसनिष्ठा । कार्यतायां प्रतियोगितासंबन्धोऽवच्छेदकः । येन संबन्धेन यत्कार्यमित्युच्यते तन्निष्ठकार्यतायां तत्संबन्धोऽवच्छेदकः । येन संबन्धेन प्रतियोगितासंबन्धेन । यत् संयोगध्वंसः । कार्यमित्युच्यते । ध्वंसनिष्ठकार्यतायां प्रतियोगितासंबन्धोऽवच्छेदकः प्रतियोगितासंबन्धावच्छिन्ना ध्वंसनिष्ठकार्यता । तथाच प्रतियोगितासंबन्धावच्छिन्नसंयोगध्वंसनिष्ठकार्यतानिरूपित तादात्म्यसंबन्धावच्छिन्नकारणतायाः संयोगे सत्त्वादतिव्याप्तिः । अतस्तद्वारणाय कार्यतायां समवायसंबन्धावच्छिन्नत्वं निवेशनीयं । संयोगध्वंसनिष्ठकार्यतायाः प्रतियोगिता संबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावान्नातिव्याप्तिः । तन्तवः पटंप्रति किंनिमित्तं समवायिकारणं भवतीति प्रश्ने पटस्य तन्तुषु समवायसंबन्धेनोत्पद्यमानत्वात् इत्युत्तरं । वह्निसंयोगस्यापि दाहंप्रति कारणत्वसिद्ध्या दाहानुकूलशक्तिः वह्निसंयोगरूपगुणेपि सिद्ध्यतीति मीमांसकमते कार्यानुकूलशक्तेः सर्वत्रांगीकार्यत्वात् एवं शक्तेः गुणवृत्तित्वं लभ्यते। जनकतासंबन्धेन जन्यं जनके वर्तते । जन्यतासंबन्धेन जनकं जन्ये वर्तते । विषयतासंबन्धेन ज्ञानं इच्छा कृतिश्च विषये वर्तते । विषयितासंबन्धेन विषयः ज्ञाने इच्छायां कृतौ च वर्तते । आधेयतासंबंधेन अधिकरणं आधेये वर्तते । आश्रयतासंबन्धेन आधेयं अधिकरणे वर्तते । प्रतियोगितासंबन्धेन अभावः प्रतियोगिनि वर्तते । अनुयोगितासंबन्धेन प्रतियोगी अभावे वर्तते ॥

## कार्येण कारणेनवा सह एकस्मिन्नर्थे समवेतं सत्कारणमसमवायिकारणं ॥ यथा तन्तुसंयोगः पटस्य तंतुरूपं पटगतरूपस्य च ॥

---

समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणताश्रयत्वं प्रथमासमवायिकारणस्य लक्षणं। तन्तुसंयोगः तन्तुषु समवायसंबन्धेन वर्तमानस्सन् समवायसंबन्धेन पटं जनयति। कार्यं पटः। कार्यता पटनिष्ठा। कार्यतायां समवायसंबन्धोऽवच्छेदकः। समवायसंबन्धावच्छिन्ना कार्यता। कारणं तंतुसंयोगः। कारणता तन्तुसंयोगनिष्ठा। कारणतायां समवायसंबन्धोऽवच्छेदकः। समवायसंबन्धावच्छिन्ना कारणता। कारणता च कार्यतानिरूपिता। तथाच तादृशकारणताश्रयत्वं तन्तुसंयोगे वर्तते इति लक्षणसमन्वयः। समवायसंबन्धावच्छिन्नकार्यतानिरूपित स्वसमवायिसमवेतत्वसंबन्धावच्छिन्नकारणताश्रयत्वं द्वितीयासमवायिकारणस्य लक्षणं। पटरूपंप्रति तन्तुरूपं द्वितीयासमवायिकारणं। तत् स्वसमवायिसमवेतत्वसंबन्धेन पटे वर्तमानं सत् समवायेन पटरूपं जनयति। कार्यं पटरूपं। कार्यता पटरूपनिष्ठा ॥

मीमांसकैकदेशभाट्टमते प्रत्यक्षानुमानादिवत् अनुपलब्धिरिति प्रमाणान्तरं। चक्षुरिन्द्रियेण घटपटादिप्रत्यक्षवत् अनुपलब्धिप्रमाणेनाभावप्रमा जायते। प्रतियोग्यारोपजन्यारोपविषयोपलब्ध्यभावोऽनुपलब्धिः। संयोगेन घटवति भूतले समवायेन घटाभावः। समवायेन घटवति कपाले संयोगेन घटाभावः। एवं कालिकादिसंबन्धभेदेन एकस्यैव घटस्यानेकाभावो द्रष्टव्यः। अन्योन्याभावप्रतियोगिता सर्वापि तदात्म्यसंबन्धावच्छिन्ना। प्रतियोगितावच्छेदकधर्मभेदेनान्योन्याभावानां भेदः। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिना साकं अभावस्य विरोधः। केवलप्रतियोगिना साकं अभावस्य विरोधांगीकारे केवलदेवदत्तवति भूतले दण्डविशिष्टदेवदत्ताभावो न स्यात्। विशिष्टाभावविरोधिनः देवदत्तरूपप्रतियोगिनः विद्यमा-

नत्वात् । प्रतियोगितावच्छेदकं दण्डविशिष्टदेवदत्तत्वं । केवलदेवदत्तवति भूतले दण्डविशिष्टो नास्ति । अन्योन्याभावो द्विविधः सामान्यभेदः विशेषभेदश्चेति । स्त्रीभेदः सामान्यभेदः । डित्थडित्थादिभेदः विशेषभेदः । घटभेदापेक्षया घटपटोभयभेदोतिरिक्तः । घटपटोभयभेदः केवलान्वयी । घटभेदस्तु घटे नास्ति । घटातिरिक्त यावत्पदार्थेषु वर्तते । अभावबुद्धिसामान्यं प्रतियोगितावच्छेदकविशिष्टप्रतियोगिना साकमभावस्य वैशिष्ट्यविषयकं भवति । घटत्वेन पटो नास्तीति प्रतीतेः प्रतियोगितावच्छेदकविशिष्टप्रतियोगिवैशिष्ट्य विषयत्वं न संभवति । घटोत्पत्तेः पूर्वं घटप्रागभावः कुत्र वर्तते इति चेत् कपाले वर्ततइति वक्तव्यं । कपालोत्पत्तेः पूर्वं घटप्रागभावः कुत्र वर्तते इतिचेत् परमाणौ वर्तते इति वक्तव्यं । एवंसति परमाणौ वर्तमानः घटप्रागभावः कपालोत्पत्त्यनन्तरं कपालंप्रति कथमागतः । मण्डुकादिवत् घटप्रागभावस्य चलनाभावादिति चेत् परमाणौ विद्यमानस्यैव घटप्रागभावस्य कपालोत्पत्त्यनन्तरं कपालेन साकं स्वरूपाख्यसंबन्धविशेषो भवति । चक्षुषा द्रव्ये वर्तमानानां गुणकर्मजातीनां प्रत्यक्षे जननीये संयुक्तसमवायः सन्निकर्षः । चक्षुस्संयुक्तः घटादिः । तत्समवायः गुणकर्मजातिप्रत्यक्षे । गुणकर्मजातयः विषयाः । विषयता गुणकर्मजातिनिष्ठा । द्रव्यसमवेतनिष्ठापि भवति । द्रव्यसमवेताः गुणकर्मजातयः । तन्निष्ठा विषयता । साच विषयता लौकिकविषयता भवति । षड्विधसन्निकर्षजन्यत्वात् । तथाच द्रव्यसमवेतवृत्तिलौकिकविषयता संबन्धेन गुणकर्मजातिप्रत्यक्षं गुणकर्मजातिषु जायते । तत्र चक्षुस्संयुक्तसमवायः स्वरूपसंबन्धेन वर्तते । एवं द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन त्वाचप्रत्यक्षंप्रति त्वक्संयुक्त समवायः कारणं । त्वाचप्रत्यक्षं नाम त्वगिन्द्रियजन्यप्रत्यक्षं । इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षस्य लक्षणं । ज्ञानत्वमात्रोक्तौ अनुमित्यादावतिव्याप्तिः । इन्द्रियार्थसन्निकर्षजन्यत्वमात्रोक्तौ इन्द्रियार्थसंनिकर्षध्वंसे अतिव्याप्तिः । अतः उभयनिवेशः ॥

॥ इति प्रत्यक्षपरिच्छेदः ॥

श्रीराम जय ।

# अनुमानप्रकरणप्रारंभः ॥

## अनुमितिकरणमनुमानं । परामर्शजन्यं ज्ञानमनुमितिः ॥ व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः ॥

अनुमितेः करणमनुमितिकरणं । करणशब्दस्य असाधारण कारणतावदर्थः । षष्ठ्याः निरूपितत्वमर्थः । निरूपितत्वस्य असाधारणकारणतायामन्वयः । तथाच अनुमितिप्रमानिरूपितासाधारणकारणतावत्त्वमनुमानस्य लक्षणं ॥

परामर्शाज्जन्यं परामर्शजन्यं । पंचम्याः जनकतार्थः । जनकतायां परामर्शस्य आधेयतासंबन्धेनान्वयः । तथाच परामर्शनिष्ठ जनकता । जन्यपदस्य जन्यतावदर्थः । जन्यतायां जनकतायाः निरूपितत्वसंबन्धेनान्वयः । तथाच परामर्शनिष्ठजनकतानिरूपित जन्यतावज्ज्ञानमनुमितिः । परामर्शनिष्ठजनकतानिरूपितजन्यतावत्त्वे सति ज्ञानत्वमनुमितेर्लक्षणं ॥

यत्रयत्र धूमः तत्रतत्र वह्निरिति व्याप्तिज्ञानं । पर्वतो धूमवानिति हेतुज्ञानं । एतज्ज्ञानद्वयात् वह्निव्याप्यधूमवान्पर्वतइति ज्ञानं जायते । सएव परामर्शः । व्याप्तिनिष्ठप्रकारतानिरूपकत्वे सति पक्षसंबन्धनिष्ठविषयतानिरूपकत्वे सति ज्ञानत्वं परामर्शस्य लक्षणं । ज्ञानत्वमात्रोक्तौ घटज्ञानेऽतिव्याप्तिः । अतः पक्षसंबन्धनिष्ठविषयता निरूपकत्वं निवेशितं । पक्षसंबन्धनिष्ठविषयतानिरूपकत्वे सति ज्ञान त्वमात्रोक्तौ धूमवान्पर्वतः इतिज्ञाने अतिव्याप्तिः । अतः व्याप्तिनिष्ठ प्रकारतानिरूपकत्वं निवेशितं । पक्षसंबन्धनिष्ठविषयतानिरूपकत्वा नुपादाने वह्निव्याप्यो धूमः इति व्याप्तिज्ञानेऽतिव्याप्तिः । अतस्तदु-

पादानं । ज्ञानत्वानुपादाने वह्निव्याप्यधूमवान्भवेत्पर्वतः इतीच्छाया मतिव्याप्तिः । अतः ज्ञानत्वं । विशिष्टवैशिष्ट्यावगाहि परामर्शः उपलक्षितवैशिष्ट्यावगाहि परामर्शः इति द्विविधः परामर्शः । वह्निव्याप्यधूमवानिति परामर्शे पर्वतांशे धूमस्य शुद्धसंयोगसंबन्धेन प्रकारत्वे उपलक्षितवैशिष्ट्यावगाहीत्युच्यते । व्याप्त्यवच्छिन्नप्रतियोगिता निरूपकसंयोगसंबन्धेन प्रकारत्वे विशिष्टवैशिष्ट्यावगाहीत्युच्यते । दण्डे रक्तत्वदशायां रक्तदण्डवानिति ज्ञानं विशिष्टवैशिष्ट्यावगाहीत्युच्यते । यदाकदाचिद्रक्तत्वे उपलक्षितवैशिष्ट्यावगाहीत्युच्यते । धूमव्यापकवह्न्यधिकरणवृत्ति धूमवान्पर्वतः इतिज्ञाने पर्वतांशे संयोग संबन्धेन धूमः प्रकारः । धूमांशे स्वरूपसंबन्धेन वृत्तिः प्रकारः । वृत्त्यंशे निरूपितत्वसंबन्धेनाधिकरणं प्रकारः । अधिकरणांशे वह्निः संयोगसंबन्धेन प्रकारः । वन्ह्यंशे स्वरूपसंबन्धेन व्यापकत्वं प्रकारः। व्यापकांशे निरूपितत्वसंबन्धेन धूमः प्रकारः । एतादृशपरामर्शेन पर्वतो वह्निमानितिज्ञानं जायते सैवानुमितिः । व्याप्तिज्ञानमनुमानं । तच्च व्यापारवद्भवति । परामर्शो व्यापारः । तादृशव्यापारवत् व्याप्तिज्ञानं। जनकतासंबन्धेन परामर्शो व्याप्तिज्ञाने वर्तते । व्याप्ति ज्ञानं च अनुमित्यसाधारणकारणं भवति । अनुमित्यसाधारणकारणत्वं च कार्यत्वातिरिक्तधर्मावच्छिन्नानुमितिनिष्ठकार्यतानिरूपितकारणताश्रयत्वं । अनुमितिं प्रति व्याप्तिज्ञानं कारणं । कार्यं अनुमितिः। कार्यता अनुमितिनिष्ठा । कार्यतावच्छेदकमनुमितित्वं । अनुमिति त्वावच्छिन्ना कार्यता । कार्यत्वातिरिक्तो यो धर्मः अनुमितित्वरूपो धर्मः । तदवच्छिन्ना या कार्यता अनुमितिनिष्ठा कार्यता । तन्निरूपिता या कारणता व्याप्तिज्ञाननिष्ठा कारणता । तदाश्रयत्वं व्याप्ति ज्ञानस्य । व्यापारवत्त्वमनिवेश्य अनुमित्यसाधारणकारणत्वमनुमान स्य लक्षणमित्युक्तौ परामर्शे अतिव्याप्तिः । अनुमितिंप्रति परामर्शस्या प्यसाधारणकारणत्वात् । अतो व्यापारवत्त्वं निवेशितं । परामर्श

स्य व्यापारत्वेन जनकतासंबन्धेन व्यापारवत्त्वासंभवान्नातिव्याप्तिः। व्यापारवत्त्वमनुमानस्य लक्षणमित्युक्तौ काले अतिव्याप्तिः। कार्यसामान्यंप्रति कालस्य कारणत्वेन परामर्शंप्रत्यपि कारणत्वात् जनकतासंबन्धेन परामर्शरूपव्यापारवत्त्वस्य काले सत्त्वादतिव्याप्तिः। तद्वारणाय अनुमित्यसाधारणकारणत्वं निवेशनीयं। कालस्य साधारणकारणत्वान्नातिव्याप्तिः। परामर्शजन्यत्वेसति ज्ञानत्वमनुमिते लक्षणं। एवंसति परामर्शप्रत्यक्षे अतिव्याप्तिः। भूतले घटइति प्रत्यक्षं प्रति घटः कारणं। तद्वत् मम परामर्शो जातः इति प्रत्यक्षंप्रति परामर्शः कारणं। अतः परामर्शजन्यत्वेसति ज्ञानत्वं परामर्शप्रत्यक्षस्य भवति। तद्वारणाय परामर्शजन्यतायां परामर्शनिष्ठजनकतायांवा समवायसंबन्धावच्छिन्नत्वं निवेशनीयं। तथासति समवायसंबन्धावच्छिन्न परामर्शनिष्ठजनकतानिरूपितजन्यताश्रयत्वेसति ज्ञानत्वमित्येकं लक्षणं परामर्शनिष्ठजनकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यताश्रयत्वे सति ज्ञानत्वं इत्यपरं लक्षणं लभ्यते। परामर्शप्रत्यक्षे नातिव्याप्तिः। परामर्शः तादात्म्यसंबन्धेन स्वस्मिन्वर्तमानस्सन् विषयतासंबन्धेन परामर्शप्रत्यक्षं जनयति। नन्वेवंसति ज्ञानत्वं व्यर्थं। तादात्म्यसंबन्धेन परामर्शः स्वस्मिन्वर्तमानस्सन् प्रतियोगितासंबन्धेन परामर्शध्वंसं जनयति। परामर्शनिष्ठजनकता तादात्म्यसंबन्धावच्छिन्ना। ध्वंसनिष्ठजन्यता प्रतियोगितासंबन्धावच्छिन्ना। नतु समवायसंबन्धावच्छिन्ना। अतः ध्वंसे अतिव्याप्तिर्नसंभवतीति ज्ञानत्वं व्यर्थं इतिचेन्न। संस्कारे अतिव्याप्तेः। समवायसंबन्धेन परामर्शः आत्मनि वर्तमानस्सन् समवायसंबन्धेन संस्कारं जनयति। एवमपि अयं स्थाणुर्वा पुरुषोवा इति संशयानन्तरं पुरुषत्वव्याप्यकरादिमानिति परामर्शेन अयं पुरुषइति प्रत्यक्षं जायते। तत्प्रत्यक्षे अतिव्याप्तिः। अतः पक्षतासहकृतपरामर्शजन्यत्वं विवक्षणीयं। अनुमितावेव पक्षता कारणं। नप्रत्यक्षे। एवं परामर्शजन्यत्वेसति ज्ञानत्वमिति लक्ष-

पांस्य वह्निव्याप्यधूमवत्पर्वतवानयं देशइति ज्ञाने अतिव्याप्तिः । पक्षतासहकृतपरामर्शजन्यत्वविवक्षणेनातिव्याप्तिः ॥

साध्यसंशयस्य पक्षतात्वे घनगर्जितेन मेघानुमितौ व्यभिचारः। तद्वारणाय सिषाधयिषाविरहविशिष्टासिद्ध्यभावः पक्षतेति विवक्षणीयं। सिषाधयिषाविरहवैशिष्ट्यंच सिद्धौ स्वाधिकरणवृत्तित्वसंबन्धेन । स्वं सिषाधयिषा विरहः। स्वाधिकरणमात्मा। तद्वृत्तिः सिद्धिः । वृत्तित्वं सिद्धेः। स्वाधिकरणवृत्तित्वसंबन्धेन सिषाधयिषाविरहः सिद्धौ वर्तते। सिषाधयिषा समवायसंबन्धेन आत्मनि वर्तते । सिषाधयिषाभावः स्वरूपसंबन्धेन सिद्धौ वर्तते किल। स्वरूपसंबन्धेन सिषाधयिषा विरहवैशिष्ट्यं सिद्धावुच्यतां । किं स्वाधिकरणवृत्तित्वसंबन्धेन वैशिष्ट्यमुच्यते इतिचेत् सिषाधयिषाकालेपि स्वरूपसंबन्धेन सिषाधयिषाभावविशिष्टसिद्धेः सत्त्वादनुमितिर्नस्यात् । स्वाधिकरणवृत्तित्वसंबन्धेन सिषाधयिषाभाववैशिष्ट्यनिवेशेतु आत्मनि सिषाधयिषा सत्त्वेन सिषाधयिषाभावासत्त्वात् स्वाधिकरणवृत्तित्वसंबन्धेन सिषाधयिषाऽभावविशिष्टा नभवति सिद्धिः। पर्वतो वह्निमानित्यनुमितिंप्रति पर्वतोवह्निमानिति सिद्धिः प्रतिबन्धिका । पर्वते वन्ह्यनुमितिर्मे जायतामिति इच्छा उत्तेजिका । प्रतिबन्धककाले कार्यजननी उत्तेजिका। स्वाधिकरणवृत्तित्वसंबन्धेन इच्छाभावविशिष्टसिद्धिः प्रतिबंधिका। स्वं इच्छाभावः। स्वाधिकरणमात्मा। तद्वृत्तिः सिद्धिः। तद्वृत्तित्वं सिद्धेः। धूमो व्याप्यः। व्याप्यता धूमनिष्ठा व्याप्यतावच्छेदकं धूमत्वं। धूमत्वावच्छिन्ना व्याप्यता। अतः अवच्छेदकं धूमत्वं अवच्छेद्या व्याप्यता। साच व्याप्तिरेव। तथाच धूमत्वावच्छिन्ना व्याप्तिः। व्याप्तिश्च साध्यसमानाधिकरणहेतुतावच्छेदकं। हेतुतावच्छेदकंच धूमत्वं। अतः धूमत्वमेवावच्छेदकमवच्छेद्यं च भवतीति विरोधः। विरोधपरिहारस्तु धूमत्वत्वेन व्याप्तिर्भवति अवच्छेद्यं च भवति। धूमत्वं स्वरूपतः अवच्छेदकं भवतीति। धूमो वह्नि

व्याप्यइति व्याप्तिज्ञानंप्रति व्यभिचारज्ञानाभावः सहचारज्ञानं च हेतुः। व्यभिचारश्च हेतुसमानाधिकरणात्यन्ताभावप्रतियोगिताव- च्छेदकसाध्यतावच्छेदकं। सहचारश्च साध्याधिकरणवृत्तित्वं। धूमो वह्निव्याप्यइत्यस्य धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छे- दकवह्नित्वावच्छिन्नवह्निसमानाधिकरणइत्यर्थः। व्याप्तौ अव्यभिचा- रः सहचारश्चेति अंशद्वयं वर्तते। तत्र सहचारज्ञानं घटितज्ञाने घट- कज्ञानं कारणमिति न्यायेन कारणं। हेतुंप्रति प्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति अव्यभिचारज्ञानंप्रति प्रतियोगितावच्छेदकं साध्यतावच्छेदकमिति व्यभिचारज्ञानाभावः प्रतिबन्धकाभावविध- या कारणं॥

सिद्धान्तव्याप्तिः। हेतुव्यापकसाध्याधिकरणवृत्तित्वं व्या- प्तिः। साध्यस्य हेतुव्यापकत्वंनाम हेत्वधिकरणवृत्त्यत्यन्ताभावा प्रतियोगित्वं। साध्यं हेतोर्व्यापकंचेत् व्याप्तिस्संभवति। अव्या- पकं चेदव्याप्तिः। पर्वतो वह्निमान् धूमादित्यत्र साध्यं हेतोर्व्यापकं भवति। पर्वतो धूमवान् वह्नेः इत्यत्र साध्यं न हेतोर्व्यापकं भवति। वह्निमान्धूमादित्यत्रापि यथाश्रुते वह्नेः हेतुव्यापकत्वं न संभवति। हेत्वधिकरणे पर्वते वर्तमानो योऽभावः महानसीयवन्ह्यभावः। प्रति- योगी। महानसीयवह्निः। एवं हेत्वधिकरणे महानसे वर्तमानः यो ऽभावः पर्वतीयवन्ह्यभावः। प्रतियोगी पर्वतीयवह्निः। एवं सकलोपि वह्निः प्रतियोग्येव भवति। अतः हेतुव्यापकइत्यस्य हेत्वधिकरण वृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवानित्यर्थो वाच्यः। एवं सति धूमवान् वह्नेः इत्यत्र धूमस्य हेतुव्यापकत्वापत्तिः। हेत्वधिकर- णवृत्त्यत्यन्ताभावप्रतियोगितनवच्छेदको यो धर्मः प्रमेयत्वरूपो धर्मः। तद्वत्त्वं धूमस्येति। अतः प्रतियोगितानवच्छेदकसाध्यतावच्छेदक- धर्मवत्त्वं हेतुव्यापकत्वमिति वक्तव्यं। एवंसति धूमस्य हेतुव्यापक त्वापत्तिर्न संभवति। साध्यतावच्छेदकं धूमत्वं हेत्वधिकरणवृत्त्यत्य

न्ताभावप्रतियोगितावच्छेदकमेव भवतीति। एवंसति वृक्षः कपि संयोगी एतद्वृक्षत्वादित्यत्र साध्यतावच्छेदकं कपिसंयोगित्वं प्रति-योगितानवच्छेदकं न भवति। हेतुः एतद्वृक्षत्वं। हेत्वधिकरणं वृक्षः। तद्वृत्तिर्योऽत्यन्ताभावः कपिसंयोगात्यन्ताभावः। अग्रे कपिसंयोग सत्त्वेपि मूले कपिसंयोगाभावात्। तादृशाभावस्य प्रतियोगी कपि संयोगः। प्रतियोगितावच्छेदकं कपिसंयोगित्वं। अनवच्छेदकं न भवतीति अव्याप्तिः। तद्वारणाय हेत्वधिकरणवृत्त्यत्यन्ताभावे प्रति योग्याधिकरणावृत्तित्वं विशेषणं देयं। तथाच हेत्वधिकरणवृत्तिः प्रतियोग्याधिकरणावृत्तिः योऽभावः तादृशाभावप्रतियोगितानवच्छे-दकसाध्यतावच्छेदकधर्मवत्त्वं हेतुव्यापकत्वं। एवंसति अव्याप्तिर्न भवति। हेत्वधिकरणवृत्तिः प्रतियोग्यधिकरणे अवृत्तिः योऽभावः पर्वतवृत्तिघटाभावः। प्रतियोगितावच्छेदकं घटत्वं। प्रतियोगिता-नवच्छेदकं कपिसंयोगित्वं। अतः हेतुव्यापकत्वं कपिसंयोगस्य भवति। पर्वतो वह्निमान् धूमादित्यत्र वह्नेः हेतुव्यापकत्वं नसंभवति। कालिकसंबन्धेन हेत्वधिकरणं कालः। तद्वृत्तिर्योऽत्यन्ताभावः वन्ह्य-भावः। प्रतियोगितावच्छेदकमेव वह्नित्वं। प्रतियोगितानवच्छेदकं न भवति। अतः हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणमिति वक्तव्यं। हेतुतावच्छेदकसंबन्धः संयोगसंबन्धः। घटः द्रव्यत्ववान् गुणकर्मा-न्यत्वविशिष्टसत्त्वादित्यत्राव्याप्तिः। साध्यं हेतुव्यापकं न भवति। साध्यं च द्रव्यत्वं। हेतुगुणकर्मान्यत्वविशिष्टसत्ता। विशिष्टसत्ता शुद्धसत्ताच एकैव। गुणे शुद्धसत्ता अस्तिचेत् विशिष्टसत्तापि वर्तते। हेत्वधिकरणं गुणः। तद्वृत्तिर्योऽत्यन्ताभावः द्रव्यत्वात्यन्ताभावः। प्रतियोगि द्रव्यत्वं। अप्रतियोगि न भवति। अतः हेत्वधिकरण मित्यत्र हेतुतावच्छेदकरूपेण हेत्वधिकरणमिति वक्तव्यं। एवंसति नाव्याप्तिः। हेतुतावच्छेदकं गुणकर्मान्यत्वविशिष्टसत्तात्वं। विशि ष्टसत्तात्वेन रूपेण हेत्वधिकरणं द्रव्यमेव भवति। तद्वृत्तिर्योऽत्यन्ता-

भावः घटाभावः । नतु द्रव्यत्वाभावः । तथाच हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकरूपेण हेत्वधिकरणे वर्तमानः प्रतियोग्यधिकरणे अवृत्तिः योऽभावः तादृशाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकधर्मवत्साध्याधिकरणवृत्तित्वं व्याप्तिरिति निष्कर्षः । इति सिद्धान्तव्याप्तिः ॥

अथ पूर्वपक्षीयव्याप्तिः । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्न प्रतियोगितानिरूपकाभाववन्निरूपिताधेयत्वाभावो व्याप्तिः । पर्वतो वह्निमान् धूमादित्यत्र धूमस्येयं व्याप्तिः संभवति । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितानिरूपकोयोऽभावः संयोगेन वन्ह्यभावः । कथमित्युक्तौ वन्ह्यभावस्य वह्निः प्रतियोगी । प्रतियोगिता वह्निनिष्ठा । प्रतियोगितावच्छेदकं वह्नित्वं । वह्नित्वावच्छिन्ना प्रतियोगिता । प्रतियोगितायां संयोगसंबन्धोवच्छेदकः । येन संबन्धेन यन्नास्तीत्युच्यते तन्निष्ठप्रतियोगितायां तत्संबन्धोवच्छेदकः । प्रकृते येन संबन्धेन संयोगसंबन्धेन । यत् वह्निः नास्तीत्युच्यते । तन्निष्ठप्रतियोगितायां वह्निनिष्ठप्रतियोगितायां । तत्संबन्धः संयोगसंबन्धः अवच्छेदकः । संयोगसंबन्धावच्छिन्नाप्रतियोगिता । एवंसति साध्यतावच्छेदकसंबन्धावच्छिन्नापि भवति । संयोगस्य साध्यतावच्छेदकसंबन्धत्वात् । येन संबन्धेन साध्यमस्तीत्युच्यते स संबन्धः साध्यतावच्छेदकसंबन्धः । एवं प्रतियोगिता साध्यतावच्छेदकधर्मावच्छिन्नापि भवति । वह्नित्वस्य साध्यतावच्छेदकधर्मत्वात् । साध्यवाचकपदेन यद्धर्मविशिष्टं प्रत्याय्यते स धर्मः साध्यतावच्छेदकः । प्रकृते साध्यवाचकपदं वह्निपदं । तेन च वह्नित्वविशिष्टं प्रत्याय्यते । स धर्मः वह्नित्वरूपो धर्मः साध्यतावच्छेदकः । अभावश्च प्रतियोगितानिरूपको भवति । एवंच साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितानिरूपकाभावः संयोगेन वन्ह्यभावः

तद्वान् ह्रदः। तद्वृत्ति जलं। तदवृत्तिर्धूमः। अवृत्तित्वं धूमस्य। एवंसति वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यत्र एतद्वृक्षत्वे अव्याप्तिः। साध्यं कपिसंयोगः। साध्याभावः कपिसंयोगाभावः। साध्याभाववान् वृक्षः। तद्वृत्ति एतद्वृक्षत्वं। तद्वृत्तित्वं एतद्वृक्षत्वस्येति तदवृत्तित्वं नास्ति। अतः साध्याभावे प्रतियोगिव्यधिकरणत्वं निवेशनीयं। प्रतियोगिव्यधिकरणत्वंच प्रतियोग्यधिकरणावृत्तित्वं। तथाच स्वप्रतियोग्यधिकरणे अवृत्तिः यः साध्याभावः गुणवृत्तिकपिसंयोगाभावः। नतु वृक्षवृत्तिकपिसंयोगाभावः। कुतइत्युक्तौ स्वपदेन वृक्षवृत्तिकपिसंयोगाभावग्रहणे स्वप्रतियोगी कपिसंयोगः। स्वप्रतियोग्यधिकरणे वृक्षे कपिसंयोगाभावस्यैव सत्त्वात्। तथाच स्वप्रतियोग्यधिकरणे अवृत्तिः यः साध्याभावः गुणवृत्तिकपिसंयोगाभावः। तद्वान् गुणः। तदवृत्ति एतद्वृक्षत्वं। तदवृत्तित्वं एतद्वृक्षत्वस्य। अतो नाव्याप्तिः। साध्याभावे प्रतियोगिवैयधिकरण्यनिवेशे द्रव्यं गुणकर्मान्यत्वविशिष्टसत्तावत् द्रव्यत्वादित्यत्र द्रव्यत्वे अव्याप्तिः। साध्याभावः गुणकर्मान्यत्वविशिष्टसत्ताभावः। सच प्रतियोगिव्यधिकरणो न भवति। कुतइत्युक्तौ प्रतियोगिव्यधिकरणइत्यस्य प्रतियोग्यधिकरणेअवृत्तिरित्यर्थः। गुणकर्मान्यत्वविशिष्टसत्ताभावस्य प्रतियोगिनी गुणकर्मान्यत्वविशिष्टसत्ता। प्रतियोग्यधिकरणं गुणोपि भवति। विशिष्टसत्तायाः शुद्धसत्तायाश्चाभेदात्। तथाच गुणकर्मान्यत्वविशिष्टसत्तारूपसाध्याभावः प्रतियोग्यधिकरणवृत्तिरेव। नतु तदवृत्तिः। अतः प्रतियोग्यधिकरणइत्यत्र प्रतियोगिनिष्ठाधेयतायां प्रतियोगितावच्छेदकधर्मावच्छिन्नत्वं निवेशनीयं। निवेशे च नाव्याप्तिः। गुणकर्मान्यत्वविशिष्टसत्ता द्रव्ये वर्तते। अधिकरणं द्रव्यं। अधिकरणता द्रव्यनिष्ठा। आधेयं गुणकर्मान्यत्वविशिष्टसत्ता। आधेयता गुणकर्मान्यत्वविशिष्टसत्तानिष्ठा। आधेयतावच्छेदकं गुणकर्मान्यत्वविशिष्टसत्तात्वं तदेव गुणकर्मान्यत्वविशिष्टसत्तारूपं यस्मा-

त्वं तदभावप्रतियोगितावच्छेदकं। तथाच तादृशप्रतियोगितावच्छेदकरूपं यद्गुणकर्मान्यत्वविशिष्टसत्तात्वं तदवच्छिन्नाधेयतानिरूपकाधिकरणताश्रयो द्रव्यमेव। नतु गुणः। तथाच गुणकर्मान्यत्वविशिष्टसत्ताभावः प्रतियोग्यधिकरणे द्रव्ये अवृत्तिर्भवत्येवेति नाव्याप्तिः। एवं प्रतियोगिनिष्ठाधेयतायां प्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वमपि निवेशनीयं। अन्यथा वह्निमान्धूमादित्यत्र वन्ह्यभावरूपसाध्याभावस्य प्रतियोगिव्यधिकरणत्वं न संभवति। प्रतियोग्यधिकरणं ह्रदः। तत्र कालिकसंबन्धेन वह्नेः सत्त्वात्। तथाच वन्ह्यभावः प्रतियोग्यधिकरणवृत्तिरेव। नतु तदवृत्तिः। अतः प्रतियोगिनिष्ठाधेयतायां प्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयं। निवेशे च वन्ह्यभावस्य प्रतियोगिव्यधिकरणत्वं संभवति। प्रतियोगिव्यधिकरणत्वं च प्रतियोग्यधिकरणे अवृत्तित्वं। प्रतियोग्यधिकरण इत्यस्य प्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणताश्रयइत्यर्थः। प्रतियोगिनिष्ठाधेयतायां प्रतियोगितावच्छेदक संबन्धावच्छिन्नत्व निवेशे प्रतियोगितावच्छेदक संबन्धावच्छिन्नप्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणताश्रयेति प्रतियोग्यधिकरणेत्यस्यार्थः। एतादृशाधिकरणं पर्वतएव। नतु ह्रदः। संयोगेन वह्नेः ह्रदे असत्त्वात्। प्रतियोग्यधिकरणे पर्वते वन्ह्यभावः अवृत्तिरेव भवति। एवं साध्याभाववद्वृत्तित्वाभावइत्यत्र वृत्तित्वाभावइत्यस्य वृत्तित्वनिष्ठप्रतियोगितानिरूपकाभाव इत्यर्थः। वृत्तित्वनिष्ठप्रतियोगितानिरूपको योऽभावः वृत्तित्वघटोभयाभावोपि। उभयाभावस्य उभयं प्रतियोगि। प्रतियोगिता उभयनिष्ठा। वृत्तित्वनिष्ठापि भवति। उभयाभावः धूमवान् वह्नेः इत्यत्र वह्निरूपहेतौ वर्तते इत्यतिव्याप्तिः। तद्वारणाय वृत्तित्वनिष्ठप्रतियोगितायां वृत्तित्वत्वावच्छिन्नत्वं निवेशनीयं। निवेशे नातिव्याप्तिः। वृत्तित्वघटोभयाभावप्रतियोगिताया उभयत्वावच्छिन्नत्वेन वृत्तित्वत्वावच्छिन्नत्वाभावात्॥ इति व्याप्तिवादः॥

॥श्रीरामो विजयते॥

## ॥ हेत्वाभासलक्षणम् ॥

**यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं दोषसामान्यलक्षणम् ॥**

यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छिन्नत्वं । ज्ञानस्येत्यत्र षष्ठ्यर्थ आधेयत्वं । उभयोः प्रतिबन्धकत्वेऽन्वयः । तथाच ज्ञाननिष्ठं अनुमितितत्करणान्यतरप्रतिबन्धकत्वं यद्विषयकत्वावच्छिन्नं तत्त्वं दोषत्वमित्यर्थः। तथाहि। दोषज्ञानं अनुमितिप्रतिबन्धकं। प्रतिबन्धकता दोषज्ञाननिष्ठा । दोषज्ञाने दोषो विषयः । विषयता दोषनिष्ठा। दोषनिष्ठविषयता ज्ञाननिरूपिता। दोषनिष्ठविषयतानिरूपकं ज्ञानं। दोषनिष्ठविषयतानिरूपकत्वं दोषज्ञाने वर्तते। तच्च दोषनिष्ठविषयतानिरूपकत्वं दोषज्ञाननिष्ठप्रतिबन्धकतायामवच्छेदकं। दोषस्य यत्पदेनोपादाने यन्निष्ठविषयतानिरूपकत्वमित्यस्य दोषनिष्ठविषयतानिरूपकत्वमित्यर्थो भवति। तथाच यन्निष्ठविषयतानिरूपकत्वं अनुमितितत्करणान्यतरप्रतिबन्धकतावच्छेदकं स दोषइत्यर्थो भवति। ह्रदो वह्निमान्धूमादित्यत्र वन्ह्यभाववद्ध्रदो दोषः। तस्येदं लक्षणं संभवति। यत्पदेन वन्ह्यभाववद्ध्रदोपादाने यन्निष्ठविषयतानिरूपकत्वं वन्ह्यभाववद्ध्रदनिष्ठविषयतानिरूपकत्वं। तच्च ह्रदो वन्ह्यभाववानिति ज्ञाने वर्तते। तादृशज्ञाने वन्ह्यभाववद्ध्रदो विषयः। विषयता वन्ह्यभाववद्ध्रदनिष्ठा। तादृशविषयतानिरूपकं ह्रदो वन्ह्यभाववानिति ज्ञानं विषयतानिरूपकत्वं तादृशज्ञाने वर्तते। वन्ह्यभाववद्ध्रदनिष्ठविषयतानिरूपके ह्रदो वन्ह्यभाववानित्याकारकज्ञाने ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकता वर्तते। तादृशप्रतिबन्धकतायां वन्ह्यभाववद्ध्रदनिष्ठविषयतानिरूपकज्ञानत्वमवच्छेदकं वन्ह्यभाववद्ध्रदो दोषः। एवं

सर्वत्र यत्पदेन दोषमुपादाय प्रतिबन्धकतापदेन च दोषज्ञाननिष्ठप्रतिबन्धकतामादाय लक्षणमुपपादनीयं । यन्निष्ठविषयतानिरूपकत्वमनुमितितत्करणान्यतरप्रतिबन्धकतावच्छेदकं स दोषः । अत्र स्वरूप संबन्धरूपावच्छेदकत्वानिवेशे पर्वतो वह्निमान्धूमादित्यत्र वन्ह्यभावो अतिव्याप्तिः । अनुमितिः पर्वतो वह्निमान् इत्यनुमितिः । अनुमिति प्रतिबन्धकं पर्वतो वन्ह्यभाववानिति ज्ञानं । प्रतिबन्धकता ज्ञाननिष्ठा । प्रतिबन्धकतावच्छेदकं पर्वतनिष्ठविषयतानिरूपकत्वं वन्ह्यभावनिष्ठ विषयतानिरूपकत्वं निश्चयत्वं च । एवंच यन्निष्ठविषयतानिरूपकत्वं वन्ह्यभावनिष्ठविषयतानिरूपकत्वंच । अतो वन्ह्यभावेऽतिव्याप्तिः । तद्वारणाय अवच्छेदकतापर्याप्त्यधिकरणत्वं विवक्षणीयं । एवमपि ह्रदो वह्निमान् धूमादित्यत्र वन्ह्यभाववद्ध्रदे असंभवः । ह्रदो वन्ह्यभाववानिति निश्चयनिष्ठानुमितिप्रतिबन्धकतावच्छेदकतापर्याप्तिः अप्रामाण्यज्ञानानास्कंदितत्व वन्ह्यभाववद्ध्रदनिष्ठविषयतानिरूपकत्व निश्चयत्वेतत्रितयेसत्त्वेनकेवलंवन्ह्यभाववद्ध्रदनिष्ठाविषयतानिरूपकत्वे असत्त्वात्। अतो व्यापकत्वरूपावच्छेदकत्वं निवेशनीयं । तत्प्रकारश्च अनुमिति प्रतिबन्धकत्वं यन्निष्ठविषयतानिरूपकत्वव्यापकं सः दोष इति । एवमप्यसंभवः । ह्रदो वह्निमानित्यत्र वन्ह्यभाव वद्ध्रदनिष्ठविषयतानिरूपकत्वस्य ह्रदइति ज्ञाने सत्त्वेपि तत्रानुमिति प्रतिबन्धकत्वस्याभावात् । अतो यद्विषयकत्वमित्यस्य यद्रूपावच्छिन्नविषयतानिरूपकत्वमित्यर्थो वाच्यः । एवंसति नासंभवः । यद्रूप पदेन दोषतावच्छेदकं धर्तव्यं । एवमपि यद्रूपावच्छिन्नविषयतानिरूपकत्वस्य ह्रदो वन्ह्यभाववान्नवेति संशये सत्त्वेपि तत्रानुमितिप्रतिबन्धकत्वस्याभावादसंभवः । अतो यद्रूपावच्छिन्नविषयतानिरूपक निश्चयत्वव्यापकत्वं निवेशनीयं । एवं वन्ह्यभाववान् ह्रदो वह्निमानिति आहार्यज्ञाने यद्रूपावच्छिन्नविषयतासत्त्वेपि अनुमितिप्रतिबन्धकत्वाभावादसंभववारणाय अनाहार्यत्वं निवेशनीयं । एवं अ-

प्रामाण्यज्ञानानास्कन्दितत्वं निवेशनीयम्। अन्यथा इदं ज्ञानं अप्रमेति अप्रामाण्यज्ञानकालीने ह्रदो वन्ह्यभाववानिति ज्ञाने प्रतिबन्धकत्वाभावेनासंभवः स्यात्। लक्षणंतु यद्रूपावच्छिन्नविषयतानिरूपकानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वव्यापकं अनुमितिप्रतिबन्धकत्वं सः दोषः इति॥

यद्रूपावच्छिन्नविषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकतातद्रूपावच्छिन्नत्वं दोषसामान्यस्य लक्षणम्। ह्रदो वह्निमानित्यत्र वन्ह्यभाववद्ध्रदो दोषः। यद्रूपं वन्ह्यभावह्रदत्वोभयं। यद्रूपावच्छिन्नविषयता ह्रदो वन्ह्यभाववानिति ज्ञानीयवन्ह्यभाववद्ध्रदनिष्ठाविषयता। तादृशविषयता निरूपकतासम्बन्धेन ह्रदो वन्ह्यभाववानिति ज्ञाने वर्तते। तत्र ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकतापि वर्तते इति यद्रूपावच्छिन्नविषयताव्यापकत्वस्य अनुमितिप्रतिबन्धकतायां सत्त्वात् वन्ह्यभाववद्ध्रदे लक्षणसमन्वयः। इदमिहावधेयम्। यद्रूपावच्छिन्नविषयता कालिकेन वन्ह्यभाववानिति ज्ञानेपि वर्तते। तत्र ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकता नास्ति। कुत इत्युक्तौ संयोगेन वह्निमानिति बुद्धिंप्रति स्वरूपेण वन्ह्यभाववत्तानिश्चयस्यैव प्रतिबन्धकत्वात्। तथाचासंभवः। नच यद्रूपावच्छिन्नविषयतायां प्रकृतानुमिति प्रतिबन्धकतावच्छेदकत्वं निवेश्यते। कालिकेन वन्ह्यभाववानिति ज्ञानीयवन्ह्यभाववद्ध्रदविषयतायां प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावान्नासंभवइति वाच्यं। कालिकेन ह्रदो वन्ह्यभाववान् स्वरूपेण ह्रदो वन्ह्यभाववानिति ज्ञानविशिष्टज्ञानस्य ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकत्वेन कालिकेन ह्रदो वन्ह्यभाववानिति ज्ञानीयवन्ह्यभाववद्ध्रदविषयतायाअपि प्रतिबन्धकतावच्छेदकत्वेनैवमसंभववारणायोगादिति चेत् उच्यते। यादृशाधेयतासमानाधिकरणाविषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तादृशाधेयतात्त्वं दोषसामान्यस्य लक्षणम्। यादृशाधेयतापदेन स्वरूपसंबन्धेन वन्ह्यभाववद्ध्रदनि-

ष्टाधेयता ग्राह्या। सामानाधिकरण्यं च स्वाधिकरणवृत्तित्वं। स्वाधिकरणत्वं च स्वावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकतासंबन्धेन अवृत्तित्वं च तेनैव संबन्धेन ॥

अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वंवा हेत्वाभासत्वं। ह्रदो वह्निमान् धूमादित्यत्र वन्ह्यभाववद्ध्रदो दोषः। तत्रेदं लक्षणं घटते। अनुमितिःह्रदो वह्निमानित्यनुमितिः। तत्प्रतिबन्धकं यथार्थज्ञानं ह्रदो वन्ह्यभाववानिति ज्ञानम्। तद्विषयः वन्ह्यभाववद्ध्रदइति लक्षणसमन्वयः। अनुमितिः पक्षः साध्यवान् साध्यव्याप्यहेतुमान् इत्याकारकसमूहालंबनरूपा। उक्तानुमितौ पक्षे साध्यं भासते। तदंशे साध्याभाववत्पक्षज्ञानं साध्याभावव्याप्यप्रतिहेतुमत्पक्षज्ञानंच प्रतिबन्धकं। पक्षे हेतुर्भासते। तदंशे हेत्वभाववत्पक्षज्ञानं प्रतिबन्धकं। एवंहेतौ साध्यव्याप्तिर्भासते तदंशे व्यभिचारज्ञानं प्रतिबन्धकं। हेतौ साध्याधिकरणवृत्तित्वं निवेशितम्। तदंशे साध्याधिकरणावृत्तित्वज्ञानं विरोधि। पक्षे पक्षतावच्छेदकज्ञानंप्रति पक्षतावच्छेदकाभाववत्पक्षज्ञानं विरोधि। अनुमितिप्रतिबन्धकेत्यादिलक्षणं दोषस्यैव नतु दुष्टस्य। तथासति दुष्टलक्षणस्यैव दोषेष्वतिव्याप्तिः संभवति। तथाहि ह्रदो वह्निमान् धूमादित्यत्र वन्ह्यभाववद्ध्रदो दोषः। धूमो दुष्टः। वन्ह्यभाववद्ध्रदः अनुमितिप्रतिबन्धकयथार्थज्ञानविषयो भवतीत्यतिव्याप्तिः। किंच ह्रदो वन्ह्यभाववान् घटश्चेति समूहालंबनज्ञानमादाय घटेतिव्याप्तिवारणाय प्रतिबन्धकतावच्छेदकविषयताश्रयत्वमिति वक्तव्यं। तथाच दुष्टेष्वसंभवः। दुष्टहेतुविषयताया अनुमितिप्रतिबन्धकतावच्छेदकताविरहात्। ननु दुष्टहेतुनिरूपणं प्रतिज्ञाय दोषलक्षणे कथिते प्रकृतासंगतिरिति चेत् उच्यते। दोषलक्षणे कथितेपि दोषवत्त्वं दुष्टानां लक्षणमिति स्वयं ज्ञातुं शक्यतया दुष्टानां लक्षणाकथनं न विरुद्धम्। अत्रानुमितिपदं अनुमितितत्करणान्यतरपरं। अन्यथा व्यभिचारज्ञानस्य अनुमित्यप्रतिबन्धकतया अव्याप्तिः। व्यभिचारज्ञानं कुतो

ऽनुमितिंप्रति न प्रतिबन्धकमिति चेत् एकहेतौ व्यभिचारज्ञानेपि अन्य हेतौ व्याप्तिज्ञानेनानुमितेर्जननात्। व्यभिचारज्ञानं व्याप्तिज्ञानेना न्यथासिद्धं। तथाहि व्यभिचारज्ञानं अनुमितिंप्रति न प्रतिबन्धकं चेत् को दोषः व्यभिचारज्ञानकाले अनुमितिर्जायतामितिचेत् तदानीं परामर्शोऽस्ति नवा। अस्तिचेत् व्यभिचारज्ञानमप्रयोजकं। असत्त्वे कारणाभावान्नानुमतिर्जायते। कुतोवा व्यभिचारज्ञानस्य प्रति बन्धकत्वं। अतः अनुमितिमात्रनिवेशे व्यभिचारे अव्याप्तिवारणाय अनुमितिपदं अनुमितितत्करणान्यतरपरं वाच्यं। यन्निरूपणान न्तरं यन्निरूप्यते तन्निरूपितसंगतिस्तत्र प्रदर्शनीया। प्रकृते सद्धेतु निरूपणानन्तरमसद्धेतुर्निरूप्यते! तत्र असद्धेतौ सद्धेतुसंगतिः प्रदर्शनीया। संगतिश्च प्रकृते प्रसंगः। प्रसंगोनाम स्मृतस्योपेक्षानर्हत्वं। प्रकृते असद्धेतुः स्मृतिविषयः। सचोपेक्षानर्हः। अवश्यं निरूपणीयत्वात्। असद्धेतुस्मरणं च सद्धेतुनिरूपणाद्भवति। कथ मितिचेत् एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायात्। तदर्थश्च ययोः पदार्थयोः संबन्धः पूर्वं गृहीतः तयोरन्यतर ज्ञानं अन्यतर स्य स्मरणं भवति। यथा हस्तिहस्तिपालकयोः पाल्यपालकभाव रूपः संबन्धो गृहीतः। अनन्तरं हस्तिदर्शने हस्तिपालकस्मरणं भवति। एवं सद्धेत्वसद्धेत्वोः स्ववृत्तिधर्मविरुद्धधर्मवत्त्वरूपसंबन्धो गृहीतः। अनन्तरं सद्धेतुज्ञाने असद्धेतुस्मरणं भवति। स्वं सद्धेतुः। स्ववृत्तिधर्मः व्याप्तिः पक्षधर्मत्वंच। तद्विरुद्धधर्मः व्याप्तिपक्षधर्मत्वो भयाभावः। तथाच सद्धेतुनिरूपणात्सद्धेतुज्ञाने जाते सद्धेतुज्ञानरूपै कसंबन्धिज्ञानादसद्धेतुरूपापरसंबन्धिस्मरणात् सद्धेतुनिरूपितप्रसंग संगतिः असद्धेतावित्ति ज्ञातव्यं। एवमेककार्यजनकत्वमपि संगति र्भवति। एककार्यं तत्त्वनिर्णयविजयरूपं। तज्जनकत्वं सद्धेतोरस द्धेतोश्च। अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं दोषस्य लक्षणम्। इति हेत्वाभाससामान्यलक्षणम्॥

साध्याभाववत्पक्षो बाधः । साध्याभावव्याप्यप्रतिहेतुमत्पक्षः सत्प्रतिपक्षः । साध्याभाववद्वृत्तिहेतुः व्यभिचारः । साध्याधिकरणावृत्तिर्हेतुः विरोधः । साध्यव्यापकीभूताभावप्रतियोगिहेतुः असाधारण्यं । हेत्वभाववत्पक्षः स्वरूपासिद्धिः । पक्षतावच्छेदकाभाववत्पक्षः आश्रयासिद्धिः । साध्यतावच्छेदकाभाववत्साध्यं साध्याप्रसिद्धिः । हेतुतावच्छेदकाभाववद्धेतुः साधनाप्रसिद्धिः । अत्यन्ताभावाप्रतियोगि साध्यं तादृशहेतुश्चानुपसंहारः । एतेषां लक्षणंतु अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वं । साध्याभाववद्वृत्तित्वं साधारण्यदोषः । अयंच दोषः साधारणदुष्टहेतौ वाच्यः । पर्वतो वह्निमान् प्रमेयत्वादित्यत्र प्रमेयत्वरूपहेतुः साधारणदुष्टहेतुः । तत्र साध्याभाववद्वृत्तित्वरूपं साधारण्यं संभवति । साध्यं वह्निः । साध्याभावः वन्ह्यभावः । साध्याभाववान् ह्रदः । तद्वृत्ति प्रमेयत्वं । वृत्तित्वं प्रमेयत्वस्य । प्रमेयत्वरूपहेतौ साध्याभाववद्वृत्तित्वरूपसाधारण्यदोषज्ञाने जाते अनन्तरं साध्याभाववदवृत्ति प्रमेयत्वमिति व्याप्तिज्ञानं न भवति । तत्प्रकारकज्ञानस्य तदभावप्रकारकज्ञानंप्रति प्रतिबन्धकत्वात् । इति साधारण्यनिरूपणम् ॥

साध्याधिकरणावृत्तित्वमसाधारण्यदोषः । शब्दो नित्यः शब्दत्वादित्यत्र शब्दत्वमसाधारण्यदोषविशिष्टम् । तस्य साध्याधिकरणावृत्तित्वरूपासाधारण्यदोषस्संभवति । साध्यं नित्यत्वं । साध्याधिकरणमाकाशं । तदवृत्तित्वं शब्दत्वस्य । अत्र शब्दत्वं नित्यत्वाधिकरणावृत्तीति असाधारण्यदोषज्ञाने जाते शब्दत्वव्यापकनित्यत्वाधिकरणवृत्ति शब्दत्वमिति व्याप्तिज्ञानं न जायते । व्याप्तिज्ञाने शब्दत्वांशे नित्यत्वाधिकरणवृत्तित्वं भासते । अतः नित्यत्वाधिकरणावृत्ति शब्दत्वमिति ज्ञानं नित्यत्वाधिकरणवृत्ति शब्दत्वमिति ज्ञानंप्रति प्रतिबन्धकं । तज्ज्ञाने तदभावज्ञानस्य प्रतिबन्धकत्वात् । दोषज्ञानस्यानुमित्यनुत्पादः व्याप्तिज्ञानानुत्पादो वा प्रयोजनं । इत्यसाधारण्यनिरूपणम् ॥

अनुपसंहारदोषः। अभावाप्रतियोगि साध्यं अभावाप्रतियोगि हेतुश्च अनुपसंहारदोषः। एतद्दोषज्ञानं व्यतिरेकव्याप्तिज्ञानंप्रति प्रतिबन्धकं। यथा घटोऽभिधेयः प्रमेयत्वादित्यत्र अभावाप्रतियोग्यभिधेयत्वं अभावाप्रतियोगि प्रमेयत्वं चानुपसंहारदोषः। एतज्ज्ञानं अभिधेयत्वाभावव्यापकाभावप्रतियोगिप्रमेयत्वमिति व्यतिरेकव्याप्तिज्ञानंप्रति अनुपसंहारदोषज्ञानं प्रतिबन्धकं। व्याप्तिज्ञाने साध्ये अभावप्रतियोगित्वं भासते। एवं हेतौ अभावप्रतियोगित्वं भासते। अनुपसंहारज्ञाने साध्ये अभावाप्रतियोगित्वं भासते। हेतावप्यभावाप्रतियोगित्वं भासते। अतः अभावाप्रतियोगि अभिधेयत्वमिति अनुपसंहारज्ञानं अभिधेयत्वाभावव्यापकाभावप्रतियोगिप्रमेयत्वमिति व्याप्तिज्ञानप्रतिबन्धकं। अतः अनुमितिकरणपदेन उक्तव्याप्तिज्ञानमादाय लक्षणसमन्वयो बोध्यः। इत्यनुपसंहारनिरूपणम्॥

साध्याभावव्याप्तिः विरोधदोषः। साध्याभावव्याप्तिविशिष्टहेतुः विरुद्धदुष्टहेतुः। शब्दो नित्यः कार्यत्वादित्यत्र कार्यत्वं हेतुः। सचविरुद्धदुष्टहेतुः। तत्रचेदं लक्षणं वर्तते। साध्यं नित्यत्वं। साध्याभावः नित्यत्वाभावः। साध्याभावव्याप्तिः कार्यत्वरूपहेतौवर्तते। यत्रयत्र कार्यत्वं तत्रतत्र नित्यत्वाभावः। यथा घटे। तथाच साध्याभावव्याप्तिविशिष्टो हेतुरिति विरोधदोषज्ञाने सति पक्षः साध्यवानित्यनुमितिर्नभवति। पक्षस्साध्यवानित्यनुमितौ साध्यव्याप्यो हेतुरितिज्ञानं कारणम्। साध्याभावव्याप्यो हेतुरिति ज्ञानं अनुमितिप्रतिबन्धकं। प्रकृते नित्यत्वाभावव्याप्यं कार्यत्वमिति ज्ञानेसति शब्दः नित्यत्ववानित्यनुमितिर्न भवति। शब्दः नित्यत्ववानित्यनुमितौ नित्यत्वाभावव्याप्यकार्यत्ववान् शब्दइति ज्ञानं तद्वत्ताबुद्धिंप्रति तदभावव्याप्यवत्तानिश्चयविधया प्रतिबन्धकं। प्रतिबन्धकता तादृशज्ञाननिष्ठा। प्रतिबन्धकतावच्छेदकं नित्यत्वाभावव्याप्तिनिष्ठविषयतानिरूपकत्वं। कथमित्युक्तौ नित्यत्वाभावव्याप्यंकार्यत्वमितिज्ञाने

नित्यत्वाभावव्याप्तिविषयः । विषयता नित्यत्वाभावव्याप्तिनिष्ठा । विषयतानिरूपकं तादृशज्ञानं । विषयतानिरूपकत्वं नित्यत्वाभाव व्याप्यं कार्यत्वमिति ज्ञाने । नित्यत्वाभावव्याप्तिनिष्ठविषयतानि-रूपकत्वं अनुमितिप्रतिबन्धकतायामवच्छेदकं । यन्निष्ठविषयता-निरूपकत्वं अनुमितिप्रतिबन्धकतायामवच्छेदकं सः दोषइति दोष-लक्षणे यत्पदेन नित्यत्वाभावव्याप्त्युपादाने यन्निष्ठविषयतानिरूपक त्वं नित्यत्वाभावव्याप्तिनिष्ठविषयतानिरूपकत्वं नित्यत्वाभावव्याप्यं कार्यत्वमितिज्ञाने वर्तमानं अनुमितिप्रतिबन्धकतावच्छेदकं । सः नित्यत्वाभावव्याप्तिर्दोषइति लक्षणसंगतिः । इति विरोधदोषानि-रूपणम् ॥

सत्प्रतिपक्षः । साध्याभावव्याप्यप्रतिहेतुमत्पक्षः सत्प्रतिपक्षः । ह्रदो वह्निमान् धूमादित्यत्र वन्ह्यभावव्याप्यजलवद्ध्रदः सत्प्रतिपक्ष दोषः । एवं शब्दो नित्यः श्रावणत्वादित्यत्र नित्यत्वाभावव्याप्य कार्यत्ववच्छब्दः सत्प्रतिपक्षः । साध्यं नित्यत्वं । साध्याभावः नित्य त्वाभावः । साध्याभावव्याप्यः नित्यत्वाभावव्याप्यः यः प्रतिहेतुः कार्यत्वरूपहेतुः । तद्विशिष्टः यः पक्षः शब्दः । तथाच नित्यत्वाभाव व्याप्यकार्यत्ववच्छब्दः सत्प्रतिपक्षदोषइति भवति । नित्यत्वाभाव व्याप्यकार्यत्ववान् शब्दइति सत्प्रतिपक्षदोषज्ञाने सति शब्दः नित्यः इत्यनुमितिर्नभवति । तत्प्रकारकबुद्धौ तदभावव्याप्यप्रकारकज्ञानस्य प्रतिबन्धकत्वात् । तथाच तत्पदेन नित्यत्वोपादाने तदभावव्याप्य प्रकारकं नित्यत्वाभावव्याप्यकार्यत्ववान् शब्द इति ज्ञानं भवति । तथाच यन्निष्ठविषयतानिरूपकत्वं नित्यत्वाभावव्याप्यकार्यत्ववच्छब्द निष्ठविषयतानिरूपकत्वं । तच्च नित्यत्वाभावव्याप्यकार्यत्ववान् शब्द इति ज्ञाने वर्तते । तादृशज्ञाने शब्दो नित्यः इत्यनुमितिप्रतिबन्धक ताच वर्तते । प्रतिबन्धकतायां नित्यत्वाभावव्याप्यकार्यत्ववच्छब्द निष्ठविषयतानिरूपकत्वमवच्छेदकं ॥

साध्याभावव्याप्यप्रतिहेतुविषयकपरामर्शकालीन साध्यव्याप्यप्रकृतहेतुविषयकपरामर्शविषयत्वं सत्प्रतिपक्षत्वं। साध्यं नित्यत्वं। साध्यव्याप्यो यः प्रकृतहेतुः श्रावणत्वरूपहेतुः। तद्विषयकः नित्यत्वव्याप्यश्रावणत्ववान् शब्द इति परामर्शः। तद्विषयः श्रावणत्व हेतुः। साध्यव्याप्यप्रकृतहेतुमान्पक्षः साध्याभावव्याप्यप्रतिहेतुमानिति परामर्शसत्त्वे श्रावणत्वरूपहेतुः सत्प्रतिपक्षः। उक्तपरामर्शद्वयसत्त्वे न काप्यनुमितिर्भवतीति प्राचीनमतम्। नवीनमतेतु प्रकृतानुमितिप्रतिबन्धकानुमितिजनकज्ञानविषयत्वं सत्प्रतिपक्षदोषस्य लक्षणम्। शब्दो नित्यः श्रावणत्वादित्यत्र नित्यत्वाभावव्याप्यकार्यत्ववच्छब्दः सत्प्रतिपक्षदोषः। तस्येदं लक्षणं संभवति। प्रकृतानुमितिः शब्दः नित्यत्ववानित्यनुमितिः। तत्प्रतिबन्धकं यज्ज्ञानं शब्दः नित्यत्वाभाववानित्यनुमित्यात्मकं ज्ञानम्। तज्जनकं यज्ज्ञानं नित्यत्वाभावव्याप्यकार्यत्ववान् शब्दः इति ज्ञानं तद्विषयः कार्यत्व रूपहेतुः। विषयत्वं कार्यत्वरूपहेतोः॥

असिद्धिस्त्रिविधा आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिश्चेति। तत्र पक्षतावच्छेदकाभावविशिष्टपक्षः आश्रयासिद्धि दोषः। गगनारविन्दं सुरभि अरविन्दत्वादित्यत्र गगनीयत्वाभाव विशिष्टारविन्दं आश्रयासिद्धिदोषः। गगनीयत्वंनाम गगनोत्पन्नत्वं। तथाच गगनीयत्वाभाववत् अरविन्दमिति निश्चयेसति गगनारविन्दं सुरभि इति अरविन्दे गगनीयत्वावगाह्यनुमितिर्नोदेति। अत्रारविन्दं गगनीयत्वाभाववत् इति ज्ञानं प्रतिबन्धकं। गगनारविन्दं सुरभीति ज्ञानं प्रतिबध्यं। प्रतिबन्धकता गगनीयत्वाभाववत् अरविन्द मिति निश्चयनिष्ठा। प्रतिबन्धकतावच्छेदकं गगनीयत्वाभावविशिष्टारविन्दनिष्ठविषयतानिरूपकत्वं। तज्ज्ञाने गगनीयत्वाभावविशिष्टारविन्दं विषयः। विषयता अरविन्दनिष्ठा। विषयतानिरूपकं ज्ञानं। निरूपकत्वं ज्ञानस्य। तथाच दोषलक्षणे यत्पदेन गगनीयत्वाभाव

विशिष्टारविन्दोत्वपादाने यन्निष्ठविषयतानिरूपकत्वं गगनीयत्वाभाव विशिष्टारविन्दनिष्ठविषयतानिरूपकत्वं । तत् गगनारविन्दं सुरभि इत्यनुमितिप्रतिबन्धकतायामवच्छेदकं । सः गगनीयत्वाभावविशिष्टारविन्दं दोषः । इत्याश्रयासिद्धिः ॥

अथ स्वरूपासिद्धिः हेत्वभावविशिष्टपक्षः स्वरूपासिद्धिदोषः शब्दो गुणः चाक्षुषत्वादित्यत्र चाक्षुषत्वं हेतुः । शब्दः पक्षः । चाक्षुषत्वाभावविशिष्टशब्दः स्वरूपासिद्धिदोषः । तस्य दोषलक्षणं संभवति । यन्निष्ठविषयतानिरूपकत्वं अनुमितितत्करणान्यतरप्रतिबन्धकतावच्छेदकं सः दोषइति लक्षणे यत्पदेन चाक्षुषत्वाभावविशिष्टशब्दोपादाने यन्निष्ठविषयतानिरूपकत्वं चाक्षुषत्वाभावविशिष्टशब्द निष्ठविषयतानिरूपकत्वं चाक्षुषत्वाभाववान् शब्दइति ज्ञाने वर्तते । तादृशविषयतानिरूपकत्वं शब्दः चाक्षुषत्ववानित्यनुमितिंप्रति प्रतिबन्धकतावच्छेदकं । सः चाक्षुषत्वाभावविशिष्टशब्दः दोषो भवति । अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञान विषयत्वरूपदोषलक्षणमपि संभवति । अनुमितिः शब्दो गुणः इत्याकारिकानुमितिः । तत्करणं चाक्षुषत्ववान शब्दइति हेतु ज्ञानं । तत्प्रतिबन्धकं यज्ज्ञानं चाक्षुषत्वाभाववान् शब्दइति ज्ञानं । तद्विषयः चाक्षुषत्वाभाववान् शब्दः । विषयत्वं शब्दस्य । इति स्वरूपासिद्धिः ॥

साध्यव्यापकत्वेसति साधनाव्यापकत्वमुपाधेर्लक्षणम् । एतादृशोपाधिज्ञानं हेतौ साध्यव्यभिचारज्ञानं जनयति ।

साध्याभावविशिष्टः पक्षो बाधः । वह्निरनुष्णः पदार्थत्वादित्यत्र अनुष्णत्वाभाववद्वह्निर्बाधदोषः । तस्यानुमितिप्रतिबन्धकज्ञान विषयत्वरूपदोषलक्षणं संभवति । अनुमितिः वह्निरनुष्णइत्यनुमितिः । तत्प्रतिबन्धकं यज्ज्ञानं वह्निरनुष्णत्वाभाववानिति ज्ञानं । वह्निरनुष्णः इति ज्ञानंप्रति वह्निरनुष्णत्वाभाववानिति ज्ञानस्य तद्वत्ताबुद्धिंप्रति तदभाववत्तानिश्चयविधया प्रतिबन्धकत्वात् । तद्विषयः अनुष्णत्वाभावविशिष्टवह्निरिति लक्षणसमन्वयः ।

प्रकृतानुमितिप्रतिबन्धकतावृत्तिधर्मवत्त्वं हेत्वाभासस्य लक्षणं धर्मे प्रतिबन्धकतावृत्तित्वं च स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वसंबन्धेन। स्वाधिकरणत्वंच स्वावच्छिन्नविषयकनिश्चयत्वसंबन्धेन। ह्रदो वह्निमान् धूमादित्यत्र वन्ह्यभाववद्ध्रदे लक्षणसमन्वयः। प्रकृतानुमितिः ह्रदो वह्निमानित्यनुमितिः तत्प्रतिबन्धकं यज्ज्ञानं ह्रदो वन्ह्यभाववानिति ज्ञानं। प्रतिबन्धकता ज्ञाननिष्ठा। प्रतिबन्धकतायां बन्ह्यभाववद्ध्रदत्वरूपधर्मः स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्व संबन्धेन वर्तते। स्वं वन्ह्यभाववद्ध्रदत्वं। स्वाधिकरणं ह्रदो वन्ह्यभाववानिति निश्चयः। तद्वृत्तिर्योभावः घटाभावः। तत्प्रतियोगी घटः अप्रतियोगि प्रतिबन्धकत्वं। अप्रतियोगित्वं प्रतिबन्धकत्वे। स्वं वन्ह्यभाववद्ध्रत्वं स्वावच्छिन्नविषयकनिश्चयः ह्रदो वन्ह्यभाववानिति निश्चयः। निश्चयत्वं तादृशनिश्चये। अनेन संबन्धेन वन्ह्यभाववद्ध्रदत्वं निश्चये वर्तते इति। इति हेत्वाभासनिरूपणम्॥

॥श्रीरामो विजयते॥

## ॥ उपमानपरिच्छेदः ॥

## उपमितिकरणमुपमानम् ॥

उपमितिंप्रति व्यापारवदसाधारणकारणं उपमानं। उपमितिः अयं गवयपदवाच्यः इत्याकारिका। एतादृशोपमितिंप्रति गोसदृशो गवयः इत्याकारकातिदेशवाक्यार्थज्ञानं असाधारण कारणं। अतिदेशवाक्यार्थज्ञाने गोसदृशः विशेष्यः। विशेष्यता गोसदृशनिष्ठा। विशेष्यतावच्छेदकं गोसदृशत्वं। गोसदृशत्वं च गोसादृश्यं। गोसादृश्यावच्छिन्ना विशेष्यता। तादृश विशेष्यतानिरूपकं ज्ञानं। गवयपदवाच्यत्वं प्रकारः। प्रकारता गवय पदवाच्यत्वनिष्ठा। प्रकारतानिरूपकं ज्ञानं। तथाच गोसादृश्याव-

च्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकमित्यस्य गोसादृश्यावच्छिन्न विशेष्यतानिरूपकं गवयपदवाच्यत्वनिष्ठप्रकारतानिरूपकमित्यर्थः ।

उपमाननिरूपणानन्तरं शब्दनिरूपणे का संगतिरित्युक्तौ कार्यकारणभावसंगतिः । उपमानकार्योपमित्या शब्दकार्यशाब्दबोधो जायते । कारणं उपमितिः । कारणत्वमुपमितौ वर्तते । तच्च कारणत्वं स्वाश्रयकारणतासंबन्धेन उपमाने वर्तते । स्वं उपमितिनिष्ठशाब्दबोधकारणत्वं । स्वाश्रयः उपमितिः । स्वाश्रयकारणमुपमानं । स्वाश्रयकारणत्वमुपमाने । एवं कार्यत्वं शाब्दबोधे । स्वं कार्यत्वं । स्वाश्रयः शाब्दबोधः । स्वाश्रयकारणं शब्दः । स्वाश्रयकारणत्वं शब्दे । अनेन संबन्धेन कार्यत्वं शब्दे वर्तते । उपमाननिरूपणानन्तरं शब्दनिरूपणंप्रति उक्तसंगतिः प्रयोजिका भवति । नवीनमते शक्तिज्ञानस्योपमितिरूपत्वात् उपमितेरुपमानजन्यत्वात्साक्षादेव कार्यकारणभावः संभवति ॥ इत्युपमानपरिच्छेदः ॥

## आप्तवाक्यं शब्दः ॥

## आप्तस्तु यथार्थवक्ता ॥

आप्तोच्चारितत्वेसति वाक्यत्वं शब्दप्रमाणलक्षणं । आप्तोच्चरितत्वंच आप्तजन्योच्चारणकर्मत्वं । उच्चारणंच कण्ठताल्वाद्यभिघातसंयोगानुकूलव्यापारः । उच्चारणकर्मत्वं च उच्चारणजन्यत्वं । प्रयोगहेतुभूतयथार्थज्ञानवत्त्वं आप्तस्य लक्षणं । प्रयोगशब्दार्थो व्यवहारः। तथाच व्यवहारजनकयथार्थज्ञानवत्त्वं आप्तस्य लक्षणं । पर्वतो वह्निमानिति शब्दप्रयोगो व्यवहारः । तंप्रति पर्वतो वह्निमानिति ज्ञानं कारणं । अर्थं बुध्वा शब्दरचनेति न्यायेन व्यवहाररूपशब्दप्रयोगं प्रति अर्थज्ञानस्य कारणत्वात् । तथाच व्यवहारजनकं यज्ज्ञानं पर्वतो वह्निमानित्याकारकं ज्ञानं । तच्च ज्ञानं यथार्थं । तादृशयथार्थज्ञानवत्त्वं पर्वतो वह्निमानिति शब्दप्रयोक्तरि चैत्रादावाप्तेवर्तत-

इति लक्षणसंगतिः। यथार्थज्ञानजन्यत्वेसति वाक्यत्वं शब्दप्रमाणस्य लक्षणं। पर्वतो वह्निमानिति वाक्यं शब्दप्रमाणं। तत्र यथार्थज्ञानजन्यत्वं वर्तते। यथार्थज्ञानं पर्वतो वह्निमानित्याकारकं ज्ञानं। तज्जन्यं पर्वतो वह्निमानित्याकारकं वाक्यं। अर्थं बुध्वा शब्दरचनेति न्यायात्। अस्मिन्लक्षणे यथार्थज्ञानजन्यत्वं शब्दप्रमाणस्य लक्षणमित्युक्तौ यथार्थज्ञानध्वंसेतिव्याप्तिः। ध्वंसंप्रति प्रतियोगिनः कारणत्वात्। अतः वाक्यत्वोपादानं। वाक्यत्वमात्रोक्तौ भ्रान्तवाक्येऽतिव्याप्तिः। तद्वारणाय यथार्थज्ञानजन्यत्वोपादानं। पदज्ञानं शाब्दबोधंप्रति कारणं। शक्तिज्ञानसाहाय्येन जायमानपदार्थोपस्थितिर्व्यापारः। अनन्तरं शाब्दबोधः फलं भवति। तत्प्रकारश्च उपदेशादिना। गोपदस्य गौरर्थः। अंपदस्य कर्मत्वमर्थः। नीञ्धातोः आनयनमर्थइति प्रथमतः शक्तिज्ञानं भवति। कदाचित् गामानयेति केनचिदुक्तवाक्यश्रवणे जाते गोः कर्मत्वस्य आनयनस्य च स्मरणं भवति। सएव व्यापारः। गामानयेति वाक्यश्रवणेन गवानयनादीनां स्मरणं एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेन भवति। अस्य न्यायस्यायमर्थः। ययोः पदार्थयोः संबन्धज्ञानं जातं तयोर्मध्ये एकस्य ज्ञाने जाते अन्यस्य स्मरणं भवतीति। यथा हस्तिहस्तिपालकयोः पाल्यपालकभावरूपसंबन्धज्ञाने जाते अनन्तरं कदाचित् हस्तिमात्रं हस्तिपालकं वा यदा पश्यति। तदा हस्तिदर्शनात् एतद्धस्तिरक्षकः पूर्वमागतइति हस्तिपालकस्य स्मरणं भवति। हस्तिपालकदर्शने वा अयं तादृशहस्तिनमारूढ आगतइति हस्तिनः स्मरणं भवति। पाल्यपालकभावरूपसंबन्धज्ञानाकारश्च अयमेतद्धस्तिनः पालकः इत्याकारकः। तथाप्रकृते इदं गोपदं गोवाचकं गौः गोपदस्य वाच्यः इत्याकारकं वाच्यवाचकभावरूपसंबन्धज्ञानं गोपदगोरूपार्थयोर्भवति। अनन्तरं कदाचिद्गोपदश्रवणे गोपदरूपैकसंबन्धिज्ञानात् गोरूपापरसंबन्धिनः स्मरणं भवति। एवं चैत्रपदे

योः अविनाभावरूपसंबन्धज्ञाने जाते चैत्रमैत्रयोर्मध्ये एकस्य दर्श-ने अन्यस्य स्मरणं भवति। एवमेव तत्तत्पदस्य तत्तदर्थस्य च अयमेतत्पदवाच्यः इत्याकारकवाच्यवाचकभावसंबन्धज्ञाने जाते अनन्तरं कदाचित्पदश्रवणे अर्थस्य स्मरणं भवति। पदात्पदार्थस्मरणे जननीये पदनिरूपितशक्तिज्ञानं कारणं। तद्वत्पदनिरूपितलक्षणा-ज्ञानमपि कारणं। यथा गामानयेत्यत्र गोपदेन गोरूपार्थस्मरणे जननीये गोपदनिरूपितशक्तिज्ञानं कारणं। गोपदनिरूपितशक्तिश्च गोपदात् गौर्बोद्धव्यः इतीश्वरसंकेतः। तादृशसंकेतः विषयतासंबन्धेन गवि वर्तते। संकेतएव शक्तिः। तद्वत् गङ्गायां घोषइत्यत्र गङ्गापदेन तीरविषयकस्मरणे जननीये गङ्गापदनिरूपितशक्तिज्ञानं कारणं न भवति। गङ्गापदनिरूपितशक्तेः तीरे अभावात्। कुतइत्युक्तौ गङ्गापदेन प्रवाहो बोद्धव्यइतीश्वरस्य संकेतः नतु गङ्गापदात्तीरं बोद्धव्यमिति। अतो गङ्गापदेन तीरस्मरणे जननीये गङ्गापदनिरूपितलक्ष-णाज्ञानं कारणं वाच्यं। लक्षणा च पदस्यार्थस्य च संबन्धविशेषः। सच गङ्गापदस्य स्ववाच्यसंबन्धः। स्वं गङ्गापदं। स्ववाच्यः प्रवाहः। तत्संबन्धस्तीरे वर्तते। तथाच पदनिरूपितशक्तिर्नाम पदादर्थो बोद्धव्यइति संकेतः। लक्षणानाम पदार्थसंबन्धः। गङ्गापदस्य तीरे लक्ष-णानाम गङ्गापदार्थसंबन्धः। गङ्गापदार्थः प्रवाहः। तत्संबन्धः संयोगस्तीरे वर्तते। तीरं गङ्गापदशक्यप्रवाहसंबन्धीति लक्षणाज्ञानसत्त्वे अनन्तरं कदाचिद्गङ्गायां घोषइति केनाचिदुक्ते घोषः प्रवाहवृत्तिर्नभवतीति बाधज्ञाने सति गङ्गापदं तीरतात्पर्येण प्रयुक्तमिति तात्पर्यज्ञाने जाते तीरोपस्थितिर्भवति। अनन्तरं तीरे घोषइति शाब्दबोधो भवति। लक्षणा त्रिविधा। तत्र काचिल्लक्षणा लक्ष्यतावच्छे-दकरूपेण लक्ष्यमात्रं बोधयति। यथा गङ्गायां घोषइत्यत्र गङ्गापदस्य तीरे लक्षणा वर्तते। एषा लक्षणा लक्ष्यतावच्छेदकतीरत्वेन रूपेण

तीरमात्रं बोधयति। लक्ष्यं तीरं। लक्ष्यता तीरनिष्ठा। लक्ष्यतावच्छेदकं तीरत्वं। गङ्गायां घोषइति वाक्येन तीरवृत्तिर्घोषइति शाब्दबोधोदयात्। इयं लक्षणा जहल्लक्षणेत्युच्यते। जहती शक्यार्थं परित्यजन्ती लक्षणा जहल्लक्षणा। वर्तते चेदं लक्षणं तत्र। सा लक्षणा गङ्गापदशक्यार्थं प्रवाहं परित्यजतीति। तीरनिष्ठगङ्गापदलक्षणा गङ्गापदशक्यार्थं प्रवाहं परित्यजतीत्यस्य कोऽर्थइतिचेत् गङ्गापदेन तीरवृत्तिर्घोषः इत्याकारकशाब्दबोधे जाते तादृशशाब्दबोधे गङ्गापदार्थः प्रवाहो न भासते। यथा चैत्रो मैत्रं परित्यज्य ग्रामं गच्छतीत्युक्तौ मैत्रस्य परित्यागोनाम ग्रामे प्रवेशाभावः। तथा गङ्गायां घोषइत्यत्र गङ्गापदलक्षणा गङ्गापदशक्यार्थं प्रवाहं परित्यजतीत्युक्तौ गङ्गापदलक्षणाजन्यशाब्दबोधे तीरवृत्तिर्घोषइत्याकारके प्रवाहो विषयो न भवतीति। तथाच यादृशलक्षणाजन्यशाब्दबोधे शक्यार्थो न भासते सा लक्षणा जहल्लक्षणा। ननु गङ्गायां घोषइत्यत्र गङ्गापदस्य गङ्गातीरे लक्षणामंगीकृत्य गङ्गातीरवृत्तिर्घोषः इत्याकारकशाब्दबोधांगीकारे इयं लक्षणा जहल्लक्षणैव। शाब्दबोधे शक्यार्थप्रवाहस्यापि विषयत्वात्। इतिचेन्न। यादृशलक्षणाजन्यशाब्दबोधे शक्यार्थस्य क्रियान्वयो न भासते सा जहल्लक्षणेत्यर्थात्। प्रकृते गङ्गायां घोषो वर्ततइति क्रियार्थाधेयत्वे प्रवाहस्य निरूपकत्वेनान्वयाभावात्। लक्ष्यशक्योभयं या लक्षणा बोधयति सा लक्षणा अजहल्लक्षणा। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य काकबिडालकुक्कुटादिलक्षणा। लक्षणानाम शक्यसंबन्धः। प्रकृते काकपदस्य काकः शक्यः। तत्संबन्धः बिडालकुक्कुटादिषु वर्तते। सच संबन्धः स्वनाश्यनाशकत्वं। स्वं काकः। स्वनाश्यं दधि। तन्नाशको बिडालादिः। नाशकत्वं बिडालादौ। अजहल्लक्षणेत्युक्तौ न जहातीत्यजहती अपरित्यजन्ती शक्यार्थं या लक्षणा सेत्यर्थः। तथाच या लक्षणा लक्ष्यार्थमिव शक्यार्थमपि बोधयति साऽजहल्लक्षणा। काकेभ्यो दधि रक्ष्य-

**पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्व माकांक्षा ॥**

---

तामित्यस्य काकेभ्यः दधिनाशककुक्कुटबिडालादिभ्यः दधि रक्षणीय मित्यर्थः। एतादृशशाब्दबोधे काकेभ्यो दधिरक्ष्यतामित्यनेन जननीये काकपदस्य काकबिडालकुक्कुटादिषु लक्षणा नियामिका। काकादिभ्यो दधि रक्षणीयमिति शाब्दबोधे विडालादिरिव काकोपि विषयः। अतः काकपदलक्षणा काकं न जहाति। अतः काकपदलक्षणा अजहल्लक्षणा। शक्यतावच्छेदकं परित्यज्य शक्यमात्रं या लक्षणा बोधयति सा जहदजहल्लक्षणा। यथा तत्त्वमसीत्यत्र त्वं अल्पज्ञत्वविशिष्टः तदसि सर्वज्ञत्वविशिष्टोसि इत्यर्थे उभयोर्विरोधेन ऐक्यायोगात् त्वंपदस्य अल्पज्ञत्वं परित्यज्य चेतनमात्रे तत्पदस्य सर्वज्ञत्वं परित्यज्य चेतनमात्रे लक्षणाङ्गीकारात् त्वच्चेतनः तच्चेतनाभिन्नः इति शाब्दबोधाङ्गीकारात्। तादृशशाब्दबोधे सर्वज्ञत्वाल्पज्ञत्वयोरविषयत्वात्। इयं लक्षणा जहदजहल्लक्षणा ॥

गामानयेत्यत्र गामिति द्वितीयान्तगोशब्देन गोनिष्ठं कर्मत्वमित्याकारकशाब्दबोधे जननीये गोपदांपदयोः आकाङ्क्षा कारणं। साचाकांक्षा कीदृशीत्युक्तौ यत्पदविशेष्यकाव्यवहितोत्तरत्वसंबन्धेन यत्पदप्रकारकज्ञानाभावप्रयोज्यः यादृशशाब्दबोधाभावः अव्यवहितोत्तरत्वसंबन्धेन तत्पदस्य तत्पदवत्त्वमाकांक्षा। गामित्यत्र गोनिष्ठं कर्मत्वमित्याकारकशाब्दबोधंप्रति अव्यवहितोत्तरत्वसंबन्धेन गोपदवत् अंपदमित्याकारकज्ञानं कारणं। तादृशज्ञाने अंपदं विशेष्यं। गोपदं प्रकारः। अव्यवहितोत्तरत्वंसंसर्गः। गोपदवत् अंपदमित्याकारकज्ञानसत्त्वे गोनिष्ठं कर्मत्वमित्याकारकशाब्दबोधो भवति। गोपदवत् अंपदमित्याकारकाकांक्षाज्ञानाभावे गोनिष्ठं कर्मत्वमित्याकारकज्ञानाभावः इति स तत्प्रयोजकः। यस्मिन्सति यद्भवति तं

अर्थाबाधो योग्यता ॥
पदानामविलंबेनोच्चारणं संनिधिः ॥

प्रति तस्य प्रयोजकत्वात् । यथा घटाभावं प्रति दण्डाभावः प्रयोजकः । यस्मिन्सति दण्डाभावे सति यद्भवति घटाभावो भवति । तं प्रति घटाभावंप्रति सः दण्डाभावः प्रयोजकः । प्रकृते यस्मिन्सति गोपदवदंपदमित्याकारकज्ञानाभावे सति यद्भवति गोनिष्ठं कर्मत्वमित्याकारकशाब्दबोधाभावो भवतीति तंप्रति गोनिष्ठं कर्मत्वमित्याकारकशाब्दबोधाभावंप्रति सः गोपदवत् अंपदमित्याकारकज्ञानाभावः प्रयोजकः । यत्पदविशेष्यकाव्यवहितोत्तरत्वसंबन्धेन यत्पदप्रकारकज्ञानाभावप्रयोज्यः यादृशशाब्दबोधाभावः तत्पदे तत्पदवत्त्वमाकांक्षेति आकांक्षालक्षणे । यत्पदविशेष्यकेत्यत्र यत्पदेन अंपदोपादाने यत्पदप्रकारकेत्यत्र यत्पदेन गोपदोपादाने अव्यवहितोत्तरत्वसंबन्धेन गोपदवदंपदमित्याकारकज्ञानाभावप्रयोज्यः गोनिष्ठं कर्मत्वमित्याकारकशाब्दबोधाभावइति गोनिष्ठं कर्मत्वमित्याकारकशाब्दबोधे जननीये तत्पदे अंपदे तत्पदवत्त्वं गोपदवत्त्वं गोपदांपदयोराकांक्षा ॥

योग्यतानाम बाधनिश्चयाभावः । बाधनिश्चयः प्रतिबन्धकनिश्चयः । यथा अग्निना सिञ्चतीत्यत्र सेचनकरणमग्निरिति शाब्दबोधे जननीये सेचनकरणत्वाभाववानग्निरितिनिश्चयः प्रतिबन्धकः । स एव बाधनिश्चय इत्युच्यते । सेचनकरणमग्निरिति बुद्धिंप्रति सेचनकरणत्वाभाववानग्निरिति निश्चयः तदभावप्रकारकनिश्चयविधया प्रतिबन्धकः । जलेन सिञ्चतीत्यत्र जलं सेचनकरणत्वाभाववदिति निश्चयाभावो योग्यता । स एव बाधनिश्चयाभावः ॥

अविलंबेनोच्चारणं व्यवधानाभावविशिष्टं पदकर्मकमुच्चारणं सन्निधिरित्यर्थः ॥ इति शब्दपरिच्छेदः ॥

इति कामाक्षी संगृहीता

॥ न्यायबोधिनीविषयमाला संपूर्णा ॥

श्रीरामो विजयते ॥

# नीलकण्ठीयविषयमाला



## ननु मंगलस्य कर्तव्यत्वे किं प्रमाणमितिचेन्न। शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात्। तथाहि मंगलं वेदबोधितकर्तव्यताकं अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत् ॥

वह्निः अनुमितइति व्यवहारे अनुमितइत्यस्य अनुमितिविधेय इत्यर्थः। नतु अनुमितिविषयइति। तथासति पर्वतो वह्निमानित्यनुमितौ वह्नेरिव वह्नित्वस्यापि विषयत्वात् अनुमितिविषयत्वरूपानुमितत्वस्य वह्नित्वे सत्त्वात् वह्नित्वमनुमितमिति व्यवहारः स्यात्। अतः अनुमितपदस्य अनुमितिविधेयार्थकत्वमेवांगीकरणीयं। एवं विधेयविशेषणस्य विधेयत्वं नास्तीति नियमोंगीकरणीयः। अन्यथा पर्वतो वह्निमानित्यनुमितौ विधेयभूते वह्नौ विशेषणस्य वह्नित्वस्यापि विधेयत्वप्राप्त्या वह्नित्वमनुमितमिति व्यवहारापत्तिः स्यात्। अतः विधेयविशेषणस्य विधेयत्वं न संभवति। पर्वतो वह्निमानित्यनुमितौ वह्नित्वस्य वह्निरूपविधेये विशेषणत्वात् अनुमितिविधेयत्वं न संभवति। अतः वह्नित्वमनुमितमिति व्यवहारस्य नापत्तिः। व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वात् वह्नित्वमनुमितमिति व्यवहारे अनुमितिविधेयत्वरूपानुमितत्वस्य च व्यवहर्तव्यतावच्छेदकत्वात् अनुमितिविधेयत्वरूपव्यवहर्तव्यतावच्छेदकस्य वह्नित्वे अभावात्। एवंच मंगळं वेदबोधितकर्तव्यताकमित्यत्र मंगळमुद्देश्यं। वेदबोधितकर्तव्यताकत्वं विधेयं। विधेयविशेषणं वेदः। तथाच वेदस्य विधेयविशेषणत्वेन अनुमितिविधेयत्वरूपानुमितत्वस्याभावेन शिष्टाचारानुमितश्रुतेरिति व्यवहारः कथं संगच्छतइति शंकाभि-

द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणं ।

---

प्रायः । विधेयविशेषणस्यापि विधेयत्वं संभवति । परंतु अनुमितेः पूर्वमसिद्धस्य विधेयविशेषणत्वेपि विधेयत्वं । प्रकृते वेदस्य विधेय विशेषणत्वेपि मंगळं वेदबोधितकर्तव्यताकमित्यनुमितेः पूर्वमसिद्धत्वात् विधेयत्वं नानुपपन्नं । अतः वेदस्यानुमितिविधेयत्वरूपानुमितत्वस्य संभवेनानुमितश्रुतिरिति व्यवहारः संगच्छते । पर्वतो वह्निमानित्यनुमितेः पूर्वं वह्नित्वस्य सिद्धत्वात् तस्य विधेयत्वासंभवइति वह्नित्वमनुमितमिति व्यवहारस्य नापत्तिरिति सिद्धान्ताभिप्रायः ।

शिष्टाचारविषयत्वादित्यत्र शिष्टाचारात् इति हेतुःकुतो नोक्तः। नच आचारस्य प्रयत्नरूपत्वात् प्रयत्नस्य च समवायसंबन्धेनात्मनिष्ठत्वात् मंगळे अभावात् स्वरूपासिद्धिदोषः स्यादिति तत्परिहाराय आचारविषयत्वादिति हेतुरुक्तइति शंकनीयं । विषयतासंबन्धेन प्रयत्नरूपाचारस्य मंगळे सत्त्वात् स्वरूपासिद्धिदोषो न भवतीति शंकाभिप्रायः । विषयतासंबन्धः वृत्त्यनियामकः आधेयताऽप्रयोजकः । विषयतासंबन्धेन प्रयत्नरूपाचारः मंगळे न वर्ततइति स्वरूपासिद्धिदोषः अपरिहार्यएवेति आचारविषयत्वस्य हेतुत्वकथनं इति समाधानाभिप्रायः । स्वर्गरूपफलस्य वेदबोधितकर्तव्यताकत्वाभावेपि उद्देश्यतारूपकृतिविषयत्वसत्त्वेन व्यभिचारः । अतः कृतिविषयत्वादिति स्थाने कृतिविधेयत्वादिति विधेयतापर्यन्तानुसरणं कार्यं । कृतिविधेयत्वं च यागएव वर्तते ॥

द्रव्यत्वेति । संयोगजनकतावच्छेदकतया द्रव्यत्वजातिसिद्धिरिति भावः । द्रव्यनिष्ठसंयोगकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् दण्डनिष्ठघटकारणतावत् । यत्रयत्र कारणतात्वं तत्र किंचिद्धर्मावच्छिन्नत्वं । दण्डनिष्ठघटकारणतायां कारणतात्वं वर्तते । दण्डत्वरूपकिंचिद्धर्मावच्छिन्नत्वं वर्तते । किंचिद्धर्मावच्छिन्नत्वव्याप्य

लक्ष्यतावच्छेदकसमनियतत्वमिति। लक्ष्यतावच्छेदकव्यापकत्वेसति लक्ष्यतावच्छेदकव्याप्यत्वमित्यर्थः।

---

कारणतात्ववती द्रव्यनिष्ठसंयोगकारणता इति परामर्शकाले सिध्यतो धर्मस्य जातित्वे लाघवमिति लाघवज्ञानसत्वे जातिरूपकिंचिद्धर्मावच्छिन्ना द्रव्यनिष्ठा संयोगकारणता इत्यनुमितिर्भवति। सच जातिरूपधर्मः द्रव्यत्वात्मकः। द्रव्यस्य द्रव्यत्वजातिमत्त्वं लक्षणमित्युक्तौ लक्षणलक्ष्यतावच्छेदकयोरैक्यं भवति। लक्षणं द्रव्यत्व जातिः। लक्ष्यतावच्छेदकं द्रव्यत्वजातिः। अत उभयोरैक्यमिति द्रव्यस्य द्रव्यत्वजातिमत्त्वं लक्षणं विहाय गुणवत्त्वं लक्षणमभिहितं। ननु पृथिवीत्यादिद्रव्यविभागोऽनुपपन्नः द्रव्यसामान्यस्य लक्षणाकथनादितिचेत् न। गुणवत्त्वस्य द्रव्यसामान्यलक्षणतयाभिमतत्वात्।

लक्ष्यतावच्छेदकव्यापकत्वं च लक्ष्यतावच्छेदकाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं। लक्ष्यतावच्छेदकव्याप्यत्वं च लक्ष्यतावच्छेदकाभाववदवृत्तित्वं। लक्ष्यतावच्छेदकव्याप्यत्वं सल्लक्षणस्य लक्षणमित्युक्तौ गोः कपिलत्वं लक्षणमित्युक्तौ कपिलत्वे अव्याप्तिदुष्टे अतिव्याप्तिः। घटस्य गगनं लक्षणमित्युक्तौ गगने असंभवदुष्टे चातिव्याप्तिः। गगनस्य कपिलत्वस्य च लक्ष्यतावच्छेदकाभाववदवृत्तित्वात्। लक्ष्यतावच्छेदकं घटत्वं। लक्ष्यतावच्छेदकाभाववान् पटः। तदवृत्ति गगनं। अवृत्तित्वं गगनस्य। यस्य लक्षणस्यातिव्याप्तिदोषो भवति तस्य लक्षणस्य हेतुत्वे व्यभिचार दोषः। अव्याप्तिदोषसत्त्वे भागासिद्धिदोषो भवति। भागासिद्धिरपि पक्षैकदेशे हेत्वभावः। गौः इतरभिन्ना कपिलत्वात् इत्यत्र पक्षैकदेशे श्वेतगवि कपिलत्वस्यैवाभावात्। गौः इतरभिन्ना एकशफवत्त्वादित्यत्र पक्षे गवि एकशफस्याभावात्स्वरूपासिद्धिदोषः। येन लक्षणेन लक्ष्ये इतरभेदः साधयितुं शक्यते तल्लक्षणं व्यावर्तकलक्ष-

णं। येन लक्षणेन लक्ष्ये इतरभेदः साधयितुं न शक्यते तल्लक्षणं व्यावहारिकं लक्षणं। गोः सास्नादिमत्त्वं लक्षणमित्युक्तौ सास्नादिमत्त्वं व्यावर्तकं भवति। तथाहि। लक्ष्यं पक्षीकृत्य लक्षणं हेतुं कृत्वा इतरभेदः साधनीयः। यथा गौः पक्षः। सास्नादिमत्त्वं हेतुः। इतरभेदः साध्यं। इतरभेदव्याप्यसास्नादिमत्त्ववती गौः इति परामर्शात् गौः इतरभिन्नेत्यनुमितिर्भवति। इतरभेदानुमितिजनकं सास्नादिमत्त्वं। अतः सास्नादिमत्त्वं व्यावर्तकं। व्यवर्तकमित्यस्य इतरभेदानुमितिजनकमित्यर्थः। गोः इतरभेदवत्त्वं लक्षणमित्युक्तौ इतरभेदवत्त्वरूपलक्षणं व्यावहारिकं। कुतइत्युक्तौ इतरभेदहेतुना गवि इतरभेदः साधयितुं न शक्यते। कुतइत्युक्तौ गौः इतरभिन्ना इतरभेदवत्त्वात् इति साधने हेतुसाध्ययोरैक्यात् इतरभेदरूपहेतुः इतरभेदानुमितिजनको न भवति। अतो व्यावर्तको न भवति। किंतु गौः इतरभिन्ना इति व्यवहारजनको भवति। व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वात्। अत्र व्यवहारः इतरभिन्ना इति व्यवहारः। व्यवहर्तव्यतावच्छेदकं इतरभिन्नत्वं। इतरभिन्नत्वं च इतरभेदएव। तथाच इतरभेदः व्यावहारिकलक्षणं भवति। व्यावर्तक इत्यस्य इतरभेदानुमितिजनकतावच्छेदकप्रकारताश्रयः इत्यर्थः। इतरभेदानुमितिः गौः इतरभिन्ना इत्याकारकानुमितिः। तज्जनकं इतरभेदव्याप्यसास्नादिमत्त्ववती गौः इत्याकारकपरामर्शात्मकं ज्ञानं। तत्र गौः विशेष्या। सास्नादिमत्त्वं प्रकारः। प्रकारता सास्नादिमत्त्वनिष्ठा। सास्नादिमत्त्वनिष्ठप्रकारता च ज्ञाननिष्ठेतरभेदानुमितिजनकतायामवच्छेदिका। इतरभेदानुमितिजनकतावच्छेदकप्रकारताश्रयः सास्नादिमत्त्वं। प्रकारताश्रयत्वं सास्नादिमत्त्वस्य। विषयता विशेषेत्यस्य प्रकारतेत्यर्थः। व्यावर्तकस्यैव लक्षणत्वे लक्ष्यतावच्छेदकसमनियतत्वे। सतीत्यध्याहर्तव्यं। तथाच लक्ष्यतावच्छेदकसमनियतत्वं व्यावर्तकलक्षणस्य लक्षणं चेत् इति तदर्थः। ननु व्या-

व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिः। अतस्तद्वारणाय तद्भिन्नत्वं धर्मविशेषणं देयं॥

---

वृत्तिरभिधेयत्वं प्रमेयत्वमित्येतत्सर्वं व्यावहारिकं। लक्ष्यतावच्छेदकसमनियतत्वं व्यावर्तकलक्षणस्य लक्षणं चेत् व्यावहारिके अतिव्याप्तिः इत्येवं वक्तुं युक्तं। कुतः प्रत्येकं व्यावृत्ताभिधेयत्वादौ चातिव्याप्तिरित्युक्तमिति चेत् अयमाशयः। साध्यसंशयः पक्षता। साचानुमितिंप्रति कारणमिति प्राचीनमते गौः इतरभेदवत्त्वं लक्षणमित्यत्र इतरभेदो व्यावर्तको न भवति। तथाहि गौः इतरभिन्ना इतरभेदवत्त्वात् इति इतरभेदरूपलक्षणेन गवीतरभेदः साधनीयः। तच्च न संभवति। हेतुसाध्ययोरैक्येन इतरभेदव्याप्येतरभेदवती गौः इति परामर्शस्य गौः इतरभिन्ना इति साध्यनिश्चयरूपत्वेन गौः इतरभिन्ना नवेति साध्यसंशयाभावेन पक्षताविरहात् गौःइतरभिन्नेत्यनुमितिर्न भवति। अतः इतरभेदः प्राचीनमते व्यावर्तको न भवति। इतरभेदानुमित्यजनकत्वात्। नवीनमते इतरभेदव्याप्येतरभेदवती गौः इति परामर्शस्य गौः इतरभिन्नेति साध्यनिश्चयरूपत्वेपि अनुमिनुयामितीच्छया गौः इतरभिन्नेत्यनुमितिसंभवात् अनुमितिंप्रति साध्यसंशयस्याकारणत्वात् इतरभेदो व्यावर्तको भवति। इतरभेदानुमितिजनकत्वादिति नवीनमते इतरभेदो लक्ष्यएव। ननु व्यावर्तकत्वं च भेदानुमितिजनकत्वमिति न वक्तव्यं। तथासति भेदानुमितिजनकस्य लक्ष्यतावच्छेदकव्यापकत्वेसति लक्ष्यतावच्छेदकव्याप्यत्वं लक्षणमित्युक्तं स्यात्। तथाच व्यावृत्तौ लक्षणलक्षणस्यातिव्याप्तिकथनमसंगतं भवति। कथमितिचेत् यद्यपि गौः इतरभेदवत्त्वं लक्षणमित्यत्र इतरभेदरूपलक्षणेन लक्ष्ये गवि इतरभेदः साधयितुं न शक्यते। हेतुसाध्ययोरैक्यात्। तथापि एतद्गवि तद्गोभेदः साधयितुं शक्यते।

तथाहि । एतद्गौः तद्गोभिन्ना । महिषादीतरभेदात् इति यत्किंचि द्भेदः साधयितुं शक्यते । अतः इतरभेदरूपव्यावृत्तिरपि इतरभेदा-नुमितिजनिकैव । अतो व्यावृत्तिरपि लक्ष्यैव । तस्मात् व्यावृत्तावति व्याप्तिकथनमसंगतमेव । भेदानुमितिजनकत्वं व्यावर्तकत्वमित्युक्तौ अभिधेयत्वप्रमेयत्वादीनां यत्किंचिदुभयत्वावच्छिन्नप्रतियोगिताक-भेदानुमापकतया तत्रातिव्याप्तिकथनमसंगतमेव । व्यतिरेकिधर्माणां शृङ्गित्वकपिलत्वादीनां केवलान्वयिभिन्नानां यत्किंचिद्व्यावर्तकत्व मस्त्येव । कपिलगवि श्वेतगोभेदानुमितिजनकतया गवि अश्वभेदा-नुमितिजनकतया भेदानुमितिजनकत्वं व्यावर्तकत्वमित्युक्तौ कपिल-त्वं शृङ्गित्वं च भेदानुमितिजनकत्वेन व्यावर्तकमेव भवति । कपिल त्वशृङ्गित्वयोः भेदानुमितिजनकत्वं कथमितिचेत् कपिलगौः श्वेतगो भिन्ना कपिलत्वात् गौः अश्वभिन्ना शृङ्गित्वात् इत्यनुमानसंभवेन कपिलत्वं शृंगित्वमपि भेदानुमितिजनकं भवति । अतो व्यावर्तकत्वे न लक्ष्यत्वात् तत्रातिव्याप्तिर्न भवति । अतो लक्ष्यतावच्छेदकव्या-पकत्वनिवेशनं व्यर्थं भवति । तस्मात्सामान्यतो भेदानुमितिजनक त्वं व्यावर्तकत्वमिति न वक्तव्यं । किंतु पृथिवीत्वावच्छिन्नेतरभेदा नुमितिजनकस्य गन्धस्य पृथिवीत्वसमनियतत्वं लक्षणं पदार्थेतर भेदानुमितिजनकस्य पदार्थत्वसमनियतत्वं लक्षणमिति विशिष्य वक्तव्यं । तच्च न संभवति । पदार्थेतरस्याप्रसिद्धेः । अभिधेयत्वादेः गोत्वव्याप्यत्वं च नास्ति । यत्रयत्राभिधेयत्वं तत्र गोत्वमिति व्याप्ति र्नास्ति । महिषादावभिधेयत्वं वर्तते तत्र गोत्वं नास्ति । सास्नादि मत्त्वं इतरभेदानुमितिजनकं गोमात्रवृत्तित्वात् । यः यद्व्यक्तिमात्र निष्ठः सः तदितरभेदानुमितिजनकः यथा गन्धः इत्यपि न । इतर भेदरूपसाध्येइतरभेदानुमितिजनकत्वं नास्तीति साधारण्यदोषः । सामान्यतः प्रतियोगिविशेषमनन्तर्भाव्य गवेतरभेदानुमितिजनकत्वं व्यावर्तकत्वमित्युक्तौ तादृशव्यावर्तकत्वशरीरे प्रतियोगिविशेषः अन्त-

र्भूतः कथमित्युक्तौ गवेतरभेदस्य गवेतरत् प्रतियोगि तच्च प्रतियोगि गवेतरभेदानुमितिजनकत्वरूपव्यावर्तकत्वे अन्तर्भूतं । व्यावर्तकत्वे प्रतियोगिविशेषः नान्तर्भूतः । भेदानुमितिजनकत्वं व्यावर्तकत्वमित्युक्तौ गोभिन्ना महिषादयः ये सर्वपदार्थाः तद्भेदस्य गोनिष्ठस्य व्यावृत्तिरूपस्य व्यावर्तकत्वं स्यात् । गोनिष्ठेतरभेदरूपव्यावृत्तेरपि गौः घटपटोभयभिन्ना इतरभेदात् इति गवि घटपटोभयभेदानुमिति जनकत्वात् इतरभेदरूपव्यावृत्तेरपि व्यावर्तकत्वापत्तिः । अतः भेदानुमितिजनकत्वं व्यावर्तकत्वमिति न वक्तव्यं । सामान्यतः इतरभेदानुमितिजनकव्यावर्तकस्य लक्ष्यतावच्छेदकसमनियतत्वं लक्षणमिति नोच्यते । किंतु प्रत्येकं गोव्यावर्तकस्य गोत्वसमनियतत्वं लक्षणं पृथिवीव्यावर्तकस्य पृथिवीत्वसमनियतत्वं लक्षणंइत्युच्यते इतिचेत् गोव्यावर्तकइत्यस्य गवेतरभेदानुमितिजनकइत्यर्थः । पृथिवीव्यावर्तकइत्यस्य पृथिवीतरभेदानुमितिजनकइत्यर्थः । तथाच पृथिवीतरभेदानुमितिजनकस्य पृथिवीत्वसमनियतत्वं लक्षणमित्युक्तं भवति । एवंसति व्यावृत्तेः व्यावर्तकत्वसंभवेपि अभिधेयत्वादावतिव्याप्तिकथन मसंगतं । पदार्थेतरभेदानुमितिजनकस्य पदार्थत्वसमनियतत्वं लक्षणमित्यस्य वक्तुं शक्यत्वे अभिधेयत्वे अतिव्याप्तिकथनं संगतं स्यात् । तथा वक्तुं न शक्यते । पदार्थेतरस्याप्रसिद्धत्वात् । गवेतरभेदानुमितिजनकस्य गोत्वसमनियतत्वं लक्षणमिति प्रत्येकं वक्तुं न शक्यते । गवेतरभेदानुमितिजनकस्य गोत्वसमनियतत्वं लक्षणमित्युक्तौ इतर भेदरूपव्यावृत्तावतिव्याप्तिः संभवति । इतरभेदस्य गवेतरभेदानुमितिजनकत्वं न संभवति । हेतुसाध्ययोरैक्यात् । अतः इतरभेद रूपव्यावृत्तेः गवेतरभेदानुमितिजनकत्वरूपव्यावर्तकत्वासंभवेनालक्ष्य त्वात् इतरभेदरूपव्यावृत्तौ गोत्वसमनियतत्वेनातिव्याप्तिः । तथापि अभिधेयत्वप्रमेयत्वादौ अतिव्याप्तिकथनमसंगतं । पदार्थेतरभेदानुमितिजनकस्य पदार्थत्वसमनियतत्वं लक्षणमिति वक्तव्यतया पदा

थेतरस्याप्रसिद्धत्वात् लक्षणलक्ष्ययोरेवाभावात् अतिव्याप्तेरसंभवात् लक्ष्यतावच्छेदकसमनियतत्वं व्यावर्तकस्य लक्षणमित्युक्तौ व्यावृत्तौ अभिधेयत्वादौ अतिव्याप्तिवारणाय व्यावृत्तिभिन्नत्वं अभिधेयत्वादिभिन्नत्वं निवेशितं कथं संगच्छतइतिचेत् अस्यायमभिप्रायः। गवि सास्नादिमत्त्वं वर्तते। महिषादिरूपेतरभेदोपि वर्तते। एवं द्रव्यत्व पृथिवीत्वादयः। तत्र सास्नादिमत्त्वं गवेतरभेदानुमितिजनकं भवति। नतु द्रव्यत्वादिकं। तत्कुतः इति शङ्कायां सास्नादिमत्त्वं गोत्वावच्छिन्ने गवि इतरभेदानुमितिजनकं गोत्वव्यापकत्वेसति गोत्वव्याप्यत्वात्। यः यद्धर्मव्यापकत्वे सति यद्धर्मव्याप्यः सः तद्धर्मावच्छिन्नेतरभेदानुमितिजनकः यथा गन्धः। गन्धश्च पृथिवीत्वव्यापकः। यत्रयत्र पृथिवीत्वं तत्र गन्धः इति गन्धस्य व्यापकत्वात्। एवं पृथिवीत्वव्याप्योपि भवति। पृथिवीत्वाभाववति जले गन्धस्यावृत्तित्वात्। अतः गन्धः पृथिव्यां इतरभेदानुमितिजनकः। तथा सास्नादिमत्त्वे गोत्वव्यापकत्वे सति गोत्वव्याप्यत्वात् गोत्वावच्छिन्ने गवि इतरभेदानुमितिजनकत्वं सास्नादिमत्त्वस्यावश्यकं इत्यनुमानेन सास्नादिमत्त्वस्य गवेतरभेदानुमितिजनकत्वं साधनीयं। एवंसति व्यावृत्तौ अभिधेयत्वादौ च व्यभिचारः। व्यभिचारश्च द्विविधः। प्रकृतसाध्याभाववति प्रकृतहेतोः सत्त्वं प्रकृतसाध्यसदृशसाध्याभाववति प्रकृतहेतुसदृशहेतोः सत्त्वमपरो व्यभिचारः। प्रकृते यः यद्धर्मसमनियतः सः तद्धर्मावच्छिन्नेतरभेदानुमितिजनकः इति व्याप्तौ व्यावृत्तौ व्यभिचारः। कथमित्युक्तौ सास्नादिमत्त्वं पक्षीकृत्य गोत्वसमनियतत्वेन हेतुना गोत्वावच्छिन्ने गोत्वविशिष्टे गवि इतरभेदानुमितिजनकत्वसाधने इतरभेदानुमितिजनकत्वं प्रकृतसाध्यं। तच्च गोनिष्ठतरभेदरूपव्यावृत्तौ नास्ति। हेतुसाध्ययोरैक्यात्। अतः साध्याभाववत्यां इतरभेदरूपव्यावृत्तौ गोत्वसमनियतत्वरूपप्रकृतहेतुसत्त्वेन व्यभिचारः। एवं अभिधेयत्वादावपि व्यभिचारः संभवति। तत्र

प्रथमव्यभिचारो यद्यपि न संभवति। गोत्वसमनियतत्वरूपप्रकृतहेतोरसत्त्वात्। तथापि द्वितीयव्यभिचारो भवति। द्वितीयव्यभिचारश्च प्रकृतसाध्यं गोत्वावच्छिन्नेतरभेदानुमितिजनकत्वं। तत्सदृश साध्यं पदार्थत्वावच्छिन्नेतरभेदानुमितिजनकत्वं। तदभाववत् अभिधेयत्वं। तच्च पदार्थेतरभेदानुमितिजनकं न भवति। पदार्थेतरस्याप्रसिद्धत्वात्। तत्राभिधेयत्वे प्रकृतहेतुसदृशहेतुर्वर्तते। प्रकृतहेतुः गोत्वसमनियतत्वं। तत्सदृशहेतुः पदार्थत्वसमनियतत्वं। तच्चाभिधेयत्वे वर्तते। अभिधेयत्वस्य पदार्थत्वव्यापकत्वे सति पदार्थत्वव्याप्यत्वात्। अतः व्यावृत्तावभिधेयत्वादौ व्यभिचारवारणाय हेतौ व्यावृत्तिभिन्नत्वं अभिधेयत्वादिभिन्नत्वं च निवेशनीयमिति। सास्नादिमत्त्वं गवेतरभेदानुमितिजनकं गोत्वसमनियतत्वात्। अत्र सास्नादिमत्त्वं पक्षः। गवेतरभेदानुमितिजनकत्वं साध्यं। गोत्वसमनियतत्वं हेतुः। यो धर्मः यद्धर्मसमनियतः स धर्मः तद्धर्मावच्छिन्नेतरभेदानुमितिजनकः। यथा यो धर्मः गन्धरूपो धर्मः। यद्धर्मसमनियतः पृथिवीत्वसमनियतः। सः गन्धरूपो धर्मः। तद्धर्मावच्छिन्नेतरभेदानुमितिजनकः पृथिवीत्वावच्छिन्नेतरभेदानुमितिजनकः। तद्वत् सास्नादिमत्त्वे गोत्वसमनियतत्वरूपहेतोः सत्त्वात् गोत्वावच्छिन्नेतरभेदानुमितिजनकत्वमावश्यकं। गोत्वावच्छिन्नं सकलगौः तदितरत् महिषादिकं। तद्भेदः गवि वर्तते। तादृशभेदानुमितिः गौः इतरभिन्नेत्यनुमितिः। तज्जनकं सास्नादिमत्त्वं। जनकत्वं सास्नादिमत्त्वस्य। गवेतरभेदानुमितिजनकत्वं साध्यं। साध्याभाववति इतरभेदे गोत्वसमनियतत्वरूपहेतोः सत्त्वात् साधारण्यदोषः। एवं प्रकृतसाध्यं गवेतरभेदानुमितिजनकत्वं। तत्सदृशसाध्यं पदार्थेतरभेदानुमितिजनकत्वं। साध्याभाववत् अभिधेयत्वप्रमेयत्वादिकं। तत्र प्रकृतहेतुसदृशहेतुः पदार्थत्वसमनियतत्वं। तच्चाभिधेयत्वादौ वर्तते। अभिधेयत्वं हि पदार्थत्वस्य व्यापकं यत्रयत्र पदार्थत्वं तत्रा

नन्नु गुणवत्त्वं न द्रव्यलक्षणं । आद्यक्षणावच्छि न्नघटे उत्पन्नविनष्टघटे चाव्याप्तेरितिचेन्न ॥

गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षि तत्वात् ।

---

भिधेयत्ववदिति व्याप्तेः । अतः व्यावृत्तौ अभिधेयत्वे च व्यभिचार वारणाय व्यावृत्तिभिन्नत्वमभिधेयत्वाभिन्नत्वं च निवेशनीयमिति ॥

द्रव्ये उत्पद्यमानं गुणं प्रति द्रव्यस्य कारणत्वेन कारणत्वस्य कार्यपूर्ववृत्तित्वरूपत्वात् द्रव्ये गुणोत्पत्तेः पूर्वं निर्गुणं द्रव्यमंगीकरणीयं । अतः उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति न्यायेनाद्यक्षणावच्छिन्नघटे अव्याप्तिरित्यर्थः । गुणाश्रयत्वं द्रव्यस्य लक्षणमित्युक्तौ आद्यक्षणावच्छिन्नघटे अव्याप्तिर्न संभवति । द्वितीयादिक्षणे गुणस्योत्पत्स्यमानतया आद्यक्षणेपि घटे गुणाश्रयत्वसंभवादित्याभिप्रेत्य उत्पन्नविनष्टघटे अव्याप्तिराभिहिता । उक्तोत्पन्नविनष्टघटस्य द्वितीयादि क्षणे अभावात् तत्र गुणस्यानुत्पद्यमानतया गुणाश्रयत्वमपि नास्तीति उत्पन्नविनष्टघटे अव्याप्तिरिति भावः ॥

गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वं द्रव्यस्य लक्षणमित्युक्तौ नाव्याप्तिः । गुणसमानाधिकरणजातिमत्त्वं द्रव्यस्य लक्षणं । गुणसमानाधिकरणा का जातिः द्रव्यत्वजातिः । तादृशजातिमत्त्वं द्रव्यस्य लक्षणं भवतीतिचेत् तादृशसत्ताजातिमत्त्वेन गुणे अतिव्याप्तिः। अतः सत्ताभिन्नत्वं निवेशनीयं । सत्ताभिन्नजातिमत्त्वं द्रव्यस्य लक्षणमित्युक्तौ तादृशगुणत्वजातेः सत्त्वेन गुणे अतिव्याप्तिः । अतः गुणसमानाधिकरणेति ॥ इति द्रव्यलक्षणम् ॥

इति कामाक्षी संगृहीता

॥ नीलकण्ठीय विषयमाला संपूर्णा ॥